भारतीय विद्या ग्रन्थावलि नं० ४

# भगवद्गीता भारतीयदर्शनानि च

[ भारतीयविद्याभवन-व्याख्यानमालायां दत्तानां दश व्याख्यानानां संक्षेपः ]

व्याख्याता
महामहोपाध्याय श्री अनन्त कृष्ण शास्त्री
प्राध्यापक, कलकत्ता विश्वविद्यालय



प्रकाशक
श्री जयन्तकृष्ण ह० दवे, एम्० ए० एल्एल्० बी०
ऑनरेरि रजिस्ट्रार
भारतीय विद्या भवन
बम्बई

जून, इ० स० १९४४ ] [ मूल्यम् पादोनरूप्यकत्रयम्

# भारतीय विद्या ग्रन्थावली

## । प्रकाशिता ग्रन्थाः ।

| ग्रन्थनाम.... | तत्स्वरूपम्.... | तत्कर्ता.... | सम्पादकः |
|---|---|---|---|
| १ विशुद्धिमग्ग.... | पालिभाषामयो बौद्धमतग्रन्थः | बुद्धघोषाचार्यः | प्रो० धर्मानन्द कोसम्बि |
| २ भारतेश्वर बाहुबली-रासः | प्राचीनतमगुर्जरभाषापद्यं | शालिभद्रसूरिः | आचार्य श्री जिनविजय मुनिः |
| ३ ज्ञानदीपिका नाम्नी महाभारततात्पर्यटीका ( उद्योगपर्व ) | प्राचीनतमा व्याख्या | देवबोधाचार्यः | डा० सुशीलकुमार डे |

## । प्रकाश्यमाना ग्रन्थाः ।

| | | | |
|---|---|---|---|
| १ सन्देशरासकः | अपभ्रंशपद्यम् | अब्दुल रहमान मुस्लिम कविः | आचार्य श्री जिनविजय मुनिः |
| २ उक्तिव्यक्तिप्रकरणम् | संस्कृतमयः प्राच्यापभ्रंशप्राकृत-व्याकरणग्रन्थः | पण्डितदामोदरः | ,, |
| ३ कलानिधिः | प्राचीनमराठीभाषामयो गद्यरूपो ग्रन्थः | वैजनाथ | ,, |
| ४ शृङ्गारमञ्जरी | उत्तमसंस्कृतकथारूपः | परमारभोजदेवराजः | ,, |
| ५ कौटिल्यार्थशास्त्रटीका | असम्पूर्णो ग्रन्थः | योगमम् | ,, |
| ६ विनयसूत्रम् | संस्कृतभाषामयबौद्धीयसर्वास्ति-त्ववादमतानुबन्धिग्रन्थः | गुणप्रभः | महापण्डित श्री राहुल-साङ्कृत्यायनः |
| ७ चन्द्रलेखासट्टक | प्राकृतभाषामयं नाटकं | रुद्रदासः | डा० ए० एम० उपाध्ये |
| ८ लीलावतीकहा | प्राकृतपद्यमयम् | कोउहलः | ,, |
| ९ अर्थवादादिविचारः | प्राभाकरमीमांसाग्रन्थः | क्षीरसमुद्रवासीमिश्रः | आचार्य श्री टी० ए० वेङ्कटेश्वरदीक्षितः |
| १० रिष्टसमुच्चयः | शकुनविषयकः प्राकृतग्रन्थः | दुर्गदेवः | प्रो० ए० एस० गोपाणी |



# भूमिका

मातामहमहाशैलं महस्तदपितामहम् ।
कारणं जगतां वन्दे कण्ठादुपरि वारणम् ॥

श्रीमान् के. एम्. मुन्षीमहोदयः—तत्तदाचार्यसंप्रदायपरम्परया समधिगम्यमानानाम्, गवेषणाविधया प्राच्य-पाश्चात्यपण्डितप्रवरैर्नेतृवरेण्यैश्च प्रचार्यमाणानां च प्रसिद्धाप्रसिद्ध-प्राचीन-नवीनगीतासिद्धान्तानां तारतम्यपरीक्षणादिना प्राचिचारयिषुस्तान्निकाषितम्, उन्निनीषुश्च प्रत्यहं ग्लानिमिवापाद्यमानां भारतीय-संस्कृतिं प्रत्यतिष्ठिपत् स्वीयभारतीयविद्याभवनाङ्गमेकं गीतामहाविद्यालयविभागम्, यस्योद्घाटनमहोत्सव-मुपलक्ष्य तदीया समितिमामन्वयुङ्क्त दशेमानि व्याख्यानानि प्रदातुम्—'भगवद्गीता भारतीयदर्शनानि च' यत्र विषयः, इति सत्यमहमधमर्णस्तस्याः समितेः ।

शान्तिपर्वसंगृहीतानि साङ्ख्य-योग-पाञ्चरात्र-पाशुपत-वैदिकदर्शनानि हि भारतीयदर्शनानि नाम । एकैकदर्शनमधिकृत्यैकैकादिव्याख्यानावसरे समन्वयपद्धतिरेव पूर्वोत्तरमीमांसासमादृताऽत्रावलम्बिता । लक्ष्यं तु ममात्र तया पद्धत्या यथासंभवं पूर्वोत्तरपक्षसंग्रहणद्वारा स्वबुद्धिविकासनमनुषङ्गतः, प्रधानतश्च गीतामहाविद्यालयस्य सेवनम् । दशानामप्येषां व्याख्यानानां विषयानुक्रमणिकोपरि योज्यमानाऽत्रो-पाक्षिप्तान् सर्वानेव विषयान् नीतिविशेषांश्चोपस्थापयिष्यति ।

पूर्वोत्तरपक्षता हि प्रकम्प्याप्रकम्प्ययुक्तिजातोपष्टम्भनेनैव, नतु पूर्वोत्तरनिर्देशमात्रेण । उत्तर-मीमांसायां कार्याधिकरणे (४-३-५) हि सिद्धान्तेनोपक्रमः, उपसंहारश्च पूर्वपक्षेणेति शङ्करभगवत्पादाः, तदनुयायिनश्च । मदीयो निर्णय एवात्र प्रमाणमिति तु नाहमिदानीमाग्रहणामि । तत्त्वातत्त्वविनिर्णये प्रामाणिकाः पण्डितप्रवराः, विमर्शकप्रवरा वा प्रियपाठका एव हि प्रमाणम् ।

जातिकर्मोभयकृतब्राह्मण्यवाद एव गीताभिमतः ।
"धर्मेणार्थागमं कुर्याद् धर्ममर्थयुतं चरेत् ।
अविरोधेन कामस्य धर्ममर्थं च संचरेत् ॥

इति चाक्षुषाद्यर्थशास्त्रप्रणाली न गीताभिमता ; यतः—

"धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥" (७-११)

इति गीता वदति । महाकविः कालिदासोऽपि—

"अनेन धर्मः सविशेषमद्य मे त्रिवर्गसारः प्रतिभाति भामिनि ।

त्वया मनोनिर्विषयार्थकामया यदेक एव परिगृह्य सेव्यते ।। (कुमार ५-३८)

इति तमेवार्थमनुवदति ।

गीतारहस्याभिमतः कर्मयोगप्राधान्यवादो मीमांसादर्शन एव पर्यवस्येत्, यदि भगवद्रामानुजाभिमतो ज्ञानयोगस्तत्र मन्येत, नतु शङ्करभगवत्पादाभिमतः सः ।

कठवल्ल्यास्तृतीयप्रश्नेन "येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके" इति मरणविषयेणैकवाक्यता भगवद्गीतायाः ।

'अहं' 'मां' 'मया' 'मम' 'मय्या'दिपदप्रयोगान् गीतागतान् पाशुपतमतानुयायिनोऽद्वैतिनश्चेन्द्रप्रतर्दनाधिकरणन्यायेन योजयन्ति ।

कर्मसंन्यासपूर्वकात्मज्ञाननिष्ठायाम् यागादौ, पश्वादिहिंसाऽदोषतायामेव च तात्पर्यमनुगीतैकवाक्यतया सङ्गच्छते—इत्यादयो विषयास्तु विशेषतोऽत्र विमर्शनमर्हन्ति विमर्शकानाम् ।

इदं तु तथ्यमेव—यन्मदीयस्तु भक्त्यातिशयः केवलाद्वैतदर्शन एव न्यायरत्नावल्यां श्रीगौडब्रह्मानन्दसरस्वत्युक्तरीत्या 'सर्वेष्वपि दर्शनेषु दर्शनीयतमे दर्शनीये' । सर्वथा तु महकविकालिदासोक्तिरेव तपश्चर्यानिरतोमामुखेन वटुवेषं पशुपतिं प्रति प्रयुक्तोमाया इव ममापि शरणम्—

अलं विवादेन, यथा श्रुतस्त्वया तथाविधस्तावदशेषमस्तु वः ।

ममात्र भावैकरसं मनः स्थिरं न कामवृत्तिर्वचनीयमीक्षते ।।"

इति । भिन्नरुचिर्हि लोकः । निर्विशेषात्मतत्त्वसाक्षात्कारविरहितः साम्प्रतं श्रीमधुसूदनसरस्वत्या नीतिमाश्रितस्तु—

वंशीविभूषितकरान्नवनीरदाभात्

पीताम्बरादरुणबिम्बफलाधरोष्ठात् ।

पूर्णेन्दुसुन्दरमुखादरविन्दनाभात्

कृष्णात्परं किमपि तत्त्वमहं न जाने ।।

इति सादरं निवेदयति

सुधीजनविधेयः

अनन्तकृष्णशास्त्री

# ॥ विषयानुक्रमणिका ॥

## प्रथमं व्याख्यानम्



## द्वितीयं व्याख्यानम्



## तृतीयं व्याख्यानम्



## तुरीयं व्याख्यानम्



## पञ्चमं व्याख्यानम्

## षष्ठं व्याख्यानम्



## सप्तमं व्याख्यानम्



## अष्टमं व्याख्यानम्



## नवमं व्याख्यानम्



## दशमं व्याख्यानम्



# ॥ भगवद्गीता भारतीयदर्शनानि च ॥

## ॥ प्रथमं व्याख्यानम् ॥

॥ गीतायां ज्ञानयोगप्राधान्यम् ॥

"गीता सुगीता कर्तव्या किमन्यैः शास्त्रविस्तरैः ।
या स्वयं पद्मनाभस्य मुखपद्माद्विनिःसृता ॥"

इति श्लोके गीतेति स्त्रीलिङ्गं गीताया उपनिषत्त्वं गमयतीति गीतारहस्यं मनुते । परंतु तदीये मते गीतायाः कर्मयोगशास्त्रत्वमेव प्राधान्येन, नोपनिषत्त्वम्; अध्यात्मविचारस्य भक्तियोगस्य वा तत्राप्राधान्यस्यैव स्वीकारात्, इति भगवदुक्तित्वाभिप्रायेणैव गीतेति स्त्रीलिङ्गं स्यात् । उपनिषत्त्वं तु गीतायाः—"सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः" इति वचनसिद्धेनोपनिषत्सारत्वेनैव । अत एवात्र – कर्मयोगप्राधान्यपरत्वमपि नावसरति; उपनिषत्सारत्वविरोधात् । भगवदुक्तेरस्या गीतात्वे निदानं तु गीतेष्विव लेशतोऽप्यन्यथाभावेनान्यथाविवरणेन वा विस्वरत्वेन कर्णारुन्तुदत्वापादनमेव । अत एव—"गीता सुगीता कर्तव्ये"ति सुगेयत्वमावश्यकं प्रतीयते, इत्युपक्रम-परामर्शोपसंहारैकरूप्यादिसिद्ध एव गीतार्थः सर्वादरणीयः, इति गीताया उपनिषत्सारत्वान्यथानुपपत्त्या कर्मकाण्डेनोनिषदामिव सर्वासामपि गीतानां ज्ञानकर्मसमुच्चयाभिप्रायेण नैकवाक्यता, नैकशास्त्रता वाऽवसीयते, इति—"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ती"त्यादिवाक्ये विविदिषोपयोगित्वमेव कर्मकाण्डस्य, कर्मयोगाध्यायानां वेति सूच्यते, इति द्वितीयाध्यायादौ कर्मयोगप्रकरणे ज्ञानयोगस्य, ज्ञानयोगादिप्रकरणेषु कर्मयोगस्य च दर्शनेऽपि न विरोधः । अत एव—"वेदेषु सर्वैष्वहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ।" इति सकलवेदप्रतिपाद्यत्वमनहमर्थप्रत्यगभिन्नपरमात्मन एवेति प्रतिपाद्यते, इति सर्वेषां वेदानामिव सर्वस्या अपि गीताया अध्यात्मशास्त्रत्वमेव प्राधान्येन, न तु कर्मयोगप्राधान्यम् ॥

अत एव—"सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ।" (४-३३) इति सर्वस्य कर्म-भक्तियोगप्रकरणस्य ज्ञान उपनिषत्पदवाच्ये पर्यवसानं प्रतिपाद्यते । अनेन चेदं विशदीभवति—यत् स्वतन्त्रज्ञानयोगप्राधान्ये तत्र सर्वेषां शास्त्राणां गुणप्रधानभावेन, अधिकारिभेदेनावस्थाभेदेन वा सङ्गत्या सर्वाणि शास्त्राणि कृतकृत्यानि यथावदेव भविष्यन्ति, अन्यथा तु न । यावज्ज्ञानयोगाभिमतात्मस्वरूपज्ञाननिष्पत्ति सर्वाणि शास्त्राणि

सप्रयोजनानि, तदनन्तरं ज्ञानयोगशास्त्रेण साकं सर्वाणि तु बाध्यन्ते। अत एव—"तमेतमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वाणि शास्त्राणि विधि प्रतिषेध मोक्षपराणी"ति भगवत्पादानामध्यासभाष्यम् ॥

तदेवं शास्त्राणां सर्वेषां विस्तीर्णानां संग्रहेणैव गीताशास्त्रं प्रवृत्तमिति फलति ; सर्वेषामास्तिकदर्शनानां नास्तिकदर्शनानां च कथञ्चन ज्ञानयोगे पर्यवसानाद् ज्ञानयोगप्राधान्यवादे सर्वदर्शनोपयोगोऽपि सिद्धयत्येव। व्यक्तं चैतद्वेदान्तसारादौ—यत्रान्नमयादिवाक्यमूलत्वेन देहात्मवादादीनामपि प्रथमादिसोपानक्रमेण भगवत्पादाभिमते ज्ञानयोगे पर्यवसानं व्यवस्थाप्यते। कर्मयोगप्राधान्ये, भक्तियोगप्राधान्ये वाऽहमर्थप्रत्यगात्मज्ञानस्यैव ज्ञानयोगत्वात् परमात्मनो निर्विशेषस्वरूपताबोधकानां न बोधकत्वलक्षणमपि प्रामाण्यं तदभिप्रायेण, किन्तु सगुणब्रह्माभिप्रायेणैव, इति भगवत्पादाभिमतज्ञानयोगशास्त्रस्याधिकारिभेदेनावस्थाभेदेन वा बोधकत्वलक्षणमपि प्रामाण्यम्, तत्परतायामुपनिषदां गीताया वा शास्त्रत्वमपि वा व्याहन्येत ॥

॥ गीतायां मीमांसादर्शनम् ॥

युद्धप्रकरणे युद्धस्य कर्मण एव कर्तव्यत्वाकर्तव्यत्वविषय एवार्जुनस्य प्रश्नः, भगवदुत्तरमपि तं युद्धे प्रवर्तयितुमेव, इति ज्ञानादियोगप्राधान्येऽपृष्टोत्तरत्वं गीतायाः स्यात्, "आम्रान् पृष्टः कोविदारानाचष्टे"इति न्यायो वा, इति गीतारहस्यं तन्निवारणार्थं कर्मयोगप्राधान्यमेव गीताया इति निश्चिनोति। अयमेवात्रासमाधेयोऽनुयोगः—यत् कथं वा तत्रापि मते ज्ञानयोगादीनां गीतायामवसरलेशोऽपि, को वाऽयं ज्ञानयोगो नाम गीतारहस्याभिमत इति च। तत्र ज्ञानयोगस्याप्राधान्येन निर्देश इति वादे ज्ञानयोगोऽयं यदि शङ्करभगवत्पादाभिमतोऽभिमन्यते, तर्हि तु नेदं युज्यते ; तस्य कर्मयोगपरिपन्थिनः कर्मयोगानुपकारकत्वेन कर्मयोगदृष्ट्याऽप्राधान्यस्य बाधितत्वात्। अन्यादृशस्तु ज्ञानयोगो गीतारहस्याभिमतः शशशृङ्गायमाण एव, इत्यगत्या मीमांसादर्शन एव गीतायास्तात्पर्यम्, यत्रोपनिषदामर्थवादत्वम्, कर्मोपासनसमुच्चयवादो वा मन्यत इति वक्तव्यम्। तत्र चोपनिषत्सारत्वं गीताया उपनिषत्त्वव्यपदेशश्च सर्वथा नोपपद्यते ; उपनिषदामिव गीताया अप्यर्थवादतयैव प्रामाण्यापत्तेः ॥

॥ युद्धावसरे ज्ञानयोगोपदेशे नानौचित्यम् ॥

सर्वथा तु—भगवत्पादाभिमतज्ञानयोगाप्राधान्येन कर्मयोगप्राधान्यवादो गीतारहस्याभिमतो न स्वतन्त्रः, न वोपपद्यते ; कर्मयोगप्राधान्यस्य मीमांसादर्शनसंमतत्वात्, भगवत्पादाभिमतज्ञानयोगस्य तच्छास्त्रस्य वा तदनुपकारकत्वात्, इति युद्धकर्तव्याकर्तव्यतामात्रप्रश्नोत्तरत्वं गीतारहस्यमतेऽपि भक्ति-ज्ञानयोगावतारवैतथ्यादनुपपन्नमेव, इति "भक्षितेऽपि लशुने न रोगशान्तिः"। सर्वथा तु—अप्राधान्येन ज्ञानयोगावतारो यदि न दोषाय कर्मयोगप्राधान्ये, तर्हि कर्मयोगावतारोऽपि ज्ञानयोगप्राधान्ये कथं दोषाय ? मुख्यत्वेऽपि ज्ञानयोगस्य तस्य सिद्धावस्थाविषयस्य साधकावस्थायामसंभवाद् अर्जुनस्य तत्सदृक्षस्य वा गीताशास्त्राधिकारिणो दृष्ट्या कर्मयोगावतारो न विरुध्यत इति तु निष्कर्षः। सर्वं चेदं गीतायाः सुगानेनैव पूर्वोक्तप्रकारेण संभवति,

नान्यथा। विस्तीर्णानां सर्वेषामपरेषां शास्त्राणामध्यारोपापवादादिप्रक्रियया, स्थूलारुन्धत्यादिप्रक्रियया, प्रथमादिसोपानक्रमेण वा ज्ञानयोगे प्रधान एव पर्यवसानम्, इति ज्ञानयोगप्रमाणमूर्धन्यतत्त्वमस्यादिमहावाक्यैकदेशतत्पदार्थादिपरिशोधने साक्षात्परम्परया वोपयोग एव सर्वेषामपरेषां शास्त्राणाम्। अत एव संग्रहेण सर्वेषामपि शास्त्राणां प्रक्रिया अत्र निर्दिश्यन्ते। इदमेवाभिप्रेत्योपसंहरति—किमन्यैः शास्त्रविस्तरैरिति ॥

कति कानि वा दर्शनानि ?

शास्त्रपदेन चात्र दर्शनानि विवक्ष्यन्ते। कानि तानि शास्त्राणि, दर्शनानि वा संग्रहेणात्रावतारितानि ? इति विचारार्थं कानि कानि दर्शनानि गीतागोचराणीति सामान्यतो विमृशामः ॥

तत्र मोक्षमूलरो वदति—प्रस्थानभेदावलम्बनेन—न्याय-वैशेषिक साङ्ख्य योग मीमांसा वेदान्तदर्शनानि षड् भारतीयान्यास्तिकदर्शनानि—इति। भारतं तु—"साङ्ख्यं योगः पाञ्चरात्र वेदाः पाशुपत तथा।" इति पञ्च, वेदपदेन दर्शनद्वयविवक्षणे षड् दर्शनानि—इति। प्रस्थानभेदस्तु पाशुपतःपाञ्चरात्रयोरपि दर्शनत्वं स्वीकरोत्येवेत्यष्टौ दर्शनानि प्रस्थानभेदानुसरणे स्युः। अत एव—

"त्रयी साङ्ख्यं योगः पशुपतिमतं वैष्णवमिति प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च।
रुचीनां वैचित्र्यादृजु कुटिलनानापथजुषां नृणामेको गम्यस्त्वमसि पयसामर्णव इव ॥"

इति महिम्नःस्तोत्रश्लोकविवरणावसरे प्रस्थानभेदकारा मधुसूदनसरस्वत्यः पाशुपत पाञ्चरात्रयोरपि दर्शनत्वं मन्यन्ते। सौत्राण्येव दर्शनानि भारतीयदर्शनानि, इति चार्वाक-न्याय वैशेषिक-साङ्ख्य मीमांसा-वेदान्तदर्शनानामेव षड्दर्शनत्वं तु न गीताचार्याभिमतम्; "साङ्ख्य योग" इत्यादिमहाभारतवाक्यविरोधात्, आस्तिक-नास्तिक षड्दर्शनविभागस्तु नोपपद्यतेतराम्, इति लोकायतिक सौगत जैन न्याय वैशेषिक मीमांसा साङ्ख्य पाशुपत-पाञ्चरात्र-वेदान्तदर्शनानां मध्ये शास्त्रत्वम्, समादरणीयत्वं वा कथं साङ्ख्य-योग-पाशुपत-पाञ्चरात्र मीमांसा-वेदान्तदर्शनानामेव ? इदमत्र समाधानम्—यद् ब्रह्मसूत्रेषु शिष्टपरिग्रहार्हतया साङ्ख्य योग-पाशुपत पाञ्चरात्रादि-दर्शनानाम्, न्याय-वैशेषिकयोस्तदनर्हतया च विभागः सूत्रकाराणां भाष्यकाराणां वाऽत्र नियामकः—इति। सत्यप्येवं गीतायां लोकायतमतस्य, सौगतमतस्य, न्याय-वैशेषिक-साङ्ख्य-योगासाधारणप्रक्रियाणां कासाञ्चन, साङ्ख्य योगसाधारण-प्रक्रियाणां च निर्देशस्त्ववान्तरतात्पर्यविषयतयाऽन्ततो गत्वा वर्तत एव ॥

॥ गीतायां लोकायतिक-सौगत-जैनदर्शनावतारः ॥

तत्र मधुसूदनसरस्वत्यः—'अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतेमिति श्लोके प्रतिक्षणविपरिणामादिना नित्यजातत्वेन देहात्मवादम्, प्रतिक्षणविनाशितया नित्यमृतत्वेन क्षणिकविज्ञानात्मत्वं चात्मनो मत्वाऽशोच्यत्वं निरूपयन्तो गीतायां चार्वाक-सौगत-दर्शनयोर्निर्देशमपि स्वीकुर्वते। भाष्योत्कर्षदीपिकाऽपि—

उपलक्षणमेतन्नास्तिकोक्तपक्षान्तराणामपीति—तद्विवरणमनुमोदते। नित्यजातत्वं च नियमेन परिणामशील-वदात्मन इति विवरणात्तु जैनमतमप्यत्र निर्दिश्यत इत्यङ्गीकारेऽपि न दोषः॥

"देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति॥"

इति श्लोकोऽप्यत्रानुसन्धेयः। अनेन हि बाल्याद्यवस्था यथा शरीरस्य सङ्कोच-विकासाभ्याम्, एवमात्मनोऽपि सङ्कोच-विकासाभ्यामेव जन्मान्तरप्राप्तिः। सति चैवं विनैव शरीरनाशं यौवनावस्थावद् विनैवात्मनाशं जन्मान्तरप्राप्तिरिति गम्यते। सर्वथा शरीरसम्बन्धायोग्यता तु मुक्त्यवस्थायाम्, इति तदानीं सत्त्वावस्थया शुद्धावस्थया वा "ऊर्ध्वं गच्छन्ति सत्त्वस्था" इत्युक्तरीत्योर्ध्वगमनमिति तु निष्कर्षः। एतन्मतरीत्या—"नासतो विद्यते भावो नाभावो विद्यते सतः।" इति श्लोकेऽनियतसदसद्रूपत्वमेव सर्वस्येति स्याद्वादप्रक्रियाऽपीति विवक्षितुं शक्यत एव॥

अत्र हि—असतोऽभावो नास्ति, सतो भावो नास्तीति नियतसदसद्रूपत्वं सर्वेषां वार्यते, इति स्याद्वाद-प्रक्रियानुगुणा योजना। अस्यां हि योजनायां यद्यपि—भावाभावपदयोर्व्यत्ययेन योजनाद् दूरान्वयदोषो भवति, तथापि 'असतो भावस्य सतोऽभावस्य चाप्रसक्तत्वाद् भगवत्पादाद्यभिमतयोजनायामप्रसक्तप्रतिषेधः समापद्यत इति स्यादपि तदाशयः॥

॥ गीतायां वैशेषिकादिदर्शनावतारः ॥

"कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः।
सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात्॥"

इति तु परमाणुकारणपरम्, "स य एषोऽणिमे"त्यादिवाक्यमिवेति स्वीकारे न्याय-वैशेषिकदर्शनयोरपि नात्रानिर्देशः। यथा च साङ्ख्य-योग-मीमांसा-पाशुपत-पाञ्चरात्र-वेदान्तदर्शनानां तत्र तत्र विस्तरेणोल्लेखोऽपि गीतायां वर्तते, तथाऽवसरान्तरे विशदीकरिष्यते॥

॥ गीतायां कर्मणा जन्मना च जातिवादावतारः ॥

किं बहुना? कर्मणैव जातिः, न तु जन्मनेति वादः, जन्मनैव जातिः, न तु कर्मणेति वादोऽप्यत्र दरीदृश्यते। तथाहि कर्मणैव जातिः। अत एव हि "चातुर्वर्ण्यं मया सृष्टं गुण-कर्मविभागशः।" इति गीता। अत एव हि—"तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः" इतिश्लोके ब्राह्मणपदस्य ब्रह्मज्ञानिनः, ब्रह्म बुभूषोरिति वा शङ्करभगवत्पादादीनां विवरणम्, येन न जातिर्ब्राह्मण्याय, किन्तु ज्ञानमेवेति निरूपणपरा. वज्रसूच्युपनिषत् प्रत्यभिज्ञाप्यत इति—केचन। अन्ये तु—"गुण-कर्मविभागशः" इति. जन्मान्तरगतगुण-कर्मविभागेन जन्मान्तर एव जातिपरिवृत्तिः, नैकस्मिन्नेव जन्मनीत्येव गीतार्थः। अत एव—कृपाविशेषादि-गुणगणभूयिष्ठोऽप्यर्जुनः—क्षत्रियत्वेनैव सम्बोध्यते भगवता, मन्यते च तथैव स्वयमर्जुनेनापि। अत एव हि—

"भगवन् भगनेत्रघ्न ! कालसूदन ! शङ्कर ।
इमे वर्णाश्च चत्वारो विहिताः स्वस्वभावतः ?
उताहो क्रियया वर्णाः संभवन्ति महेश्वर ?
एवं मे संशयप्रश्नः, तमुच्छेत्तुं त्वमर्हसि ॥"

परमेश्वर उवाच—

"स्वभावादेव विद्यन्ते चत्वारो ब्राह्मणादयः ।
एकजात्या सुदुष्प्रापमन्यवर्णत्वमागतम् ।
तच्च कर्मविशेषेण पुनर्जन्मनि जायते ॥"

इत्युमा महेश्वरसंवाद आनुशासनिके पर्वणि । न चात्र—"जन्मनि" इति तस्मिन्नेव जन्मनीतिपरम् ; वाक्यशेषे स्पष्टं तत्रैव जन्मान्तरपरताया व्यवस्थापनात् । भण्डारकारतत्त्वविचारसमितिस्तु—महाभारतेऽमुं सन्दर्भं प्रक्षिप्तं मन्यते । सर्वथा तु—

"स्त्रियो वैश्यास्तथा शूद्रा येऽपि स्युः पापयोनयः ।
किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ॥"

इति गीतायामेव जातिब्राह्मण्यमपि परामृष्टमेव, इति कुत्रचन ज्ञानकृतब्राह्मण्यस्य "ब्राह्मणस्य विजानतः" इत्यत्र परामर्शोऽपि न विरुध्यते । अत एव—भविष्यत्पुराणे महाभाष्यादौ चोभयकृतं ब्राह्मण्यमिति व्यवस्थापनम्, इति भगवद्गीता न कर्मादिनिबन्धनब्राह्मण्यादिमात्रपरा । उभयकृतं ब्राह्मण्यं तु गायत्रीजपमात्रस्यानुष्ठाने, जातिब्राह्मणानां केषाञ्चनोमामहेश्वरसंवादोक्तप्रकारेण, पराशरमाधवीये कालकृतदोषपरिहारेण केषाञ्चन धर्माणां परिपालनेनापि न ब्राह्मण्यहानिरिति परिषत्स्वरूपनिर्णयावसरे व्यवस्थापितप्रकारेण च न विहन्यते साम्प्रतमपि । इतः परं तु ब्राह्मणानामपि सतां केषाञ्चन युद्धार्थं प्रवृत्त्या, क्षत्रियधर्मादीनां जीविकार्थं ग्रहणेन, कर्मक्षत्रियत्वादिकम्, कर्मशूद्रत्वादिकम्, कर्मचण्डालत्वादिकं वा किं किं वा भविष्यतीति तु भगवानेव जानाति । इदं तु सुधीरं वदामः—यत् कर्मचण्डालोऽपि स्वीयं ब्राह्मम्, क्षात्रं वा तेजो यथाऽवसरं स्वीये रक्ते सुगूढं केनापि निमित्तेनोद्दीप्यमानं विनियुङ्क्ते, इति तत्रापि जातिब्राह्मण्यम्, जातिक्षत्रियत्वादिकं वा जागर्त्येव सदेति । सर्वथा तु जातिकर्मोभयकृता जातिरिति व्यवस्थैव गीताभिमतेति तु तत्त्वम्, इति तदीयतत्त्व-परिरक्षणार्थं प्रयत्नः सर्वेषामपि भारतीयानामपेक्ष्यते । प्रत्यक्षमिदं सर्वेषाम्—यत् साम्प्रतं बहव एव पश्चात्तमा मराठपदव्यपदेश्या अन्ये चात्मनः क्षात्रं तेजः प्रज्वलितं परीक्ष्य क्षात्रधर्माणां स्वाधिकारे व्रात्य-संस्कारादिना समानयनार्थं प्रयतन्त इति । ततश्च "न जातु कामाद् न भयान्न लोभाद्धर्मं जह्याज्जीवितस्यापि हेतोरि"ति नीतिरेव शरणीकर्तव्या, यद्यात्मनो भारतीयत्वम्, भगवतो भगवद्गीताया वा महत्त्वं वा रक्षणीयं मन्यते ॥

अहिंसाधर्मतावादः, हिंसाऽप्यापदि गत्यन्तराभावे धर्म इति वादः, केवलकर्मयोगवादः, केवलभक्तियोगवादः, केवलज्ञानयोगवादो वाऽवान्तरतत्तद्दर्शनभेदोऽपि गीतायां वर्तत इति तु बहवो मन्यन्ते।

॥ गीताया एकत्रैव तत्त्वे मुख्यता ॥

सति चैवं सर्वत्र किं प्रामाण्यम्, उतैकत्र ? यद्येकत्र, तर्हि कुत्रेति प्रश्नो भवति। अत्र तु समाधाने "या स्वयं पद्मनाभस्य मुखपद्माद्विनिःसृता" इति श्लोकांश एव शरणम्। अनेन ह्येकभगवन्मुखनिर्गतत्वं गीताया बोध्यते। न च परस्परविरुद्धानि तमःप्रकाशवद्विरुद्धस्वभावानि वा सर्वाणि दर्शनानि, नारायणमुखनिर्गतानीति संभवति। स्पष्टं हि भारते शान्तिपर्वणि 'साङ्ख्यस्य वक्ता कपिलः' इति कर्तृभेदं दर्शनानां केषाञ्चन प्रतिपाद्यते। न च पुराणानामेकचैतन्याभिप्रायेण, शिव-विष्ण्वादिनामभेदमात्रेण वाऽविरोधवदत्र व्यवस्था संभवति ; विरुद्धस्वरूपत्वात् कारणस्वरूपाणाम्, इति तत्तदधिकारिभेदेन दर्शनानां साफल्येऽपि मुख्यदर्शनभूमिकारूपेणैव दर्शनान्तराणां मुख्या प्रवृत्तिः। अत एकैकस्य दर्शनस्य तदुत्तरदर्शनाधिकारसिद्धिपर्यन्तं प्रामाण्यमित्येव दार्शनिकानां मतम्। अत एव—अन्नमय प्राणमय मनोमय विज्ञानमयानन्दमयादिक्रमेणात्मनो निरूपणमुपनिषत्स्वपि। अतो यावत्तण्डुलनिर्वृत्ति सतुषाणामेव धान्यानां संपादनमिव, एकैकस्यापि दर्शनस्य वस्तुगत्या तुषवत् त्यागार्हस्यापि निरूपणमपेक्षितमेव। कुमारिलपादाः, मधुसूदनसरस्वत्यश्च सर्वेषां चार्वाकादीनामपि दर्शनानां यथासंभवमेकस्मिंस्तत्त्वे पर्यवसानं व्यवस्थापयन्ति तन्त्रवार्तिके, महिम्नः स्तोत्रव्याख्यायाम्, प्रस्थानभेदादौ च। यथा चान्ततो गत्वा वेदान्तानामपि ब्रह्मसाक्षात्कारानन्तरं बाधेनैव पर्यवसानेन त्यागयोग्यता, तथा सर्व एवाचार्या मन्यन्ते, इति प्राणमयानुसन्धानाधिकारप्राप्त्यनन्तरमन्नमयानुसन्धान-तदनुसारिचार्वाकदर्शनादिवैतथ्यमिव पूर्वपूर्वस्य तत्तदनुसारिग्रन्थविस्तराणां चोत्तमाधिकारिदृष्ट्या वैतथ्यमेव। इदमेवाभिप्रेत्योक्तम्—'किमन्यैः शास्त्रविस्तरै'रिति॥

॥ गीताध्ययनेन सर्वशास्त्रार्थज्ञानसंभवः ॥

तदयं निष्कर्षः—तत्तद्दर्शनतत्त्वविचारस्य स्वतन्त्रस्य यावत्करणम्, तावत् सर्वेषां ग्रन्थविस्तराणामस्ति सप्रयोजनता, अनन्तरं तु यावदादेयमादाय दर्शनान्तरैरेकवाक्यतामादायैव विचारार्थे यत्नो युक्तः, इति गीतायां सर्वदर्शनैकवाक्यतामादाय चरमफलोपदेशः क्रियत इति गीताध्ययनमेकमेव पर्याप्तं सर्वेषां तत्त्वानामवान्तराणाम्, मुख्यानां वाऽवगमार्थम्, न तु शास्त्रान्तरस्याध्ययनमत्रापेक्ष्यते।

"यावनर्थ उदपाने सर्वतः संप्लुतोदके।
तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः॥"

इति श्लोक एव 'तावान् सर्वासु गीतासु' इति विपरिणामेन पठनमर्हतीति तु हृदयम्॥

॥ गीतायां राजनीतिचर्चा ॥

राजनीतिक्षेत्रे प्रवृत्तिर्योग्या वा, न वा, इति प्रश्नस्यामुत्तरमपि सर्वसहनेन स्वकर्तव्यकरणमेव तदुपयोगि गीतार्थ इति केचन मन्यन्ते लोकमान्याः, धर्मशास्त्राविरोधेनार्थशास्त्रप्राबल्यमभिप्रेत्यैव गीतेत्यन्ये ॥

अर्थशास्त्रं हि चाक्षुषीयं शुक्रनीत्यादि वा धर्मार्थकामान् त्रीनेव पुरुषार्थान् मन्यते, न तु चतुरोऽपि मोक्षेण। यत्र—

"धर्मेणार्थागमं कुर्याद् धर्ममर्थयुतं परम्।
अविरोधेन कामस्य धर्ममर्थं च संचरेत् ॥

इति कामाविरोधेनैव धर्मार्थयोर्नयनं मन्यते, इति धर्मार्थशास्त्रयोर्विरोधे धर्मशास्त्रप्राबल्येऽपि कामविरोधे धर्मशास्त्रस्याप्यन्यथा नयनं तद्दृष्ट्याऽवश्यमेव स्वीकर्तव्यम्। आधुनिका नेतारोऽर्थशास्त्रनिष्णाता अपि स्वीयकामाविरोधेनैव धर्मशास्त्रस्य नयनं काङ्क्षन्तो वस्तुगत्या प्राचीनामेवार्थशास्त्रपद्धतिं स्वादरणीयां मन्यन्ते ॥

अत एव कर्मयोगस्य—वेदकाले, गीताकाले च विशेषतः प्रचारः, बौद्धसमये, शङ्करसमये च ज्ञानयोगस्य प्रचारः, ज्ञानेश्वरादिसमये तु भक्तिमार्गस्य केवलस्याधिकः प्रचारः, समर्थरामदासादिसमये तु पुनरपि कर्मयोगस्यैवोज्जीवनम्, यदनन्तरं भारतीयनेतॄणां लोकमान्यादीनां समये तस्य कामाविरोधेन प्रचारः, अन्तिमा तु दशा कर्मयोगस्यैव महात्मगान्धिमहोदयानां नीत्या, इत्यष्टाववस्था उद्भवाभिभवप्रकाशक्रमेण लोकमान्य-तिलकपुत्रः R. B. तिलको मन्यते गीतारहस्योपक्रमे स्वयं प्रकाशिते ॥

॥ प्राचीनाधुनिकराजनीतेर्गीतायां न स्थानम् ॥

इदमेवात्र मया मन्यते—चाक्षुषीयार्थशास्त्रस्य भगवद्गीताभिमतार्थशास्त्रस्य च नैकं स्थानम्, नैकत्र वा सहभावयोग्यताऽपि। एकं हि याति रामेश्वराभिमुखम्, अपरं तु वाराणस्यभिमुखम्। गीताचार्यो हि—धर्मार्थ काम मोक्षान् चतुरः पुरुषार्थान् मन्यते, न तु त्रीनेव चाक्षुषाद्युक्तरीत्या। अत एव—मोक्षाविरोधेनैव धर्मार्थ-कामानां नयनं तदीये मते। सति चैवम्—"धर्मेनार्थागमं कुर्याद् धर्ममर्थान्वितं परम्। कामं धर्मान्वितं कुर्यात्, अविरोधेन धर्मस्य काममर्थं च सञ्चरेत्" इत्येव नीतिरर्थशास्त्रे गीताभिमते मन्यते। अत एव—दशमाध्याये—"धर्माविरुद्धः कामोऽस्मि भूतेषु भरतर्षभ।" इति धर्माविरुद्ध एव कामो भगवता स्वविभूतितया मन्यते, न तु चाक्षुषादिमतरीत्या, आधुनिकनेतृवर्गादृतप्रणाल्या वा धर्मार्थविरुद्धोऽपि कामः, इति धर्माविरोधेन कामस्य यत्रार्थशास्त्रे व्यवस्था, तदेव ह्यर्थशास्त्रं गीताचार्याभिमतम्, इति साम्प्रतिकनेतृवर्गस्य भगवद्गीतादृतकर्मयोगे, तदभिमतार्थशास्त्रपद्धतौ वा न स्थानलेशोऽपि—इति। संग्रहस्तु—व्यासाचार्याभिमता राजनीतिस्तु "न जातु कामाद् न भयान्न लोभाद् धर्मं जह्याज्जीवितस्यापि हेतोरि"ति। विशिष्य चात्र वक्तव्यं तु मदीयमिदमेव—यत् गीताचार्याभिमते कर्मयोगे लोकमान्यतिलकस्य, तदनुयायिनां च, येषां दृष्ट्या

राजनीतिक्षेत्रे युद्धमेव स्वाभीप्सितप्राप्तिसाधनाय समुचित उपायो मन्यते, न कृपावशेन, न वाऽशक्तिसमालोचनेन, नापि वा भीतिवशेन ततो विरतिर्महत्यामप्यापद्युपस्थितायामिति, तेषां चाक्षुषीयार्थशास्त्रनीत्यनुसरणेनापि यथा स्थानं भवितुमर्हति, न तथा महात्मगान्धिमहोदयादीनाम्, ये किल विना युद्धं राजनीतिक्षेत्रे स्वीयां विजयपताकामारोपयितुमिच्छन्ति ॥

एते हि—प्राप्तोपदेशस्यार्जुनस्य स्थानं न पूरयितुमिच्छन्ति, न वा तं युद्धे प्रेरयतो भगवतः स्थानम्। एते हि—गीतोपदेशात् प्राक्तनावस्थामेवार्जुनस्य सांप्रतमर्हन्ति, यः किल—"पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः" इति नीत्या स्वमरणमपि समादरणीयममन्यत दुर्योधनादि-द्वारा, न तु राज्यम्, तत्संपादनार्थं युद्धं वा। इयान् विशेषः—यदेते राज्यं काङ्क्षन्त्यात्मनः, आत्मीयानां च कृते, न तु हिंसाप्रधानं युद्धमपि। अहिंसावादः, युद्धमिति च मम माता बन्ध्येति वाद एव। सर्वथा तु नूतना काचन गीतैवैतेषां महात्मनां तदनुयायिनां वा प्रवर्तनीया, ये किल भारतभूमेः कृते स्वप्राणपणेन चेष्टन्ते, सर्वमपि वैषयिकं सुखं तृणाय मन्यन्ते, असहनीयानि च दुःखजातानि परमानन्दभावेन समाद्रियन्ते। मम तु सांप्रतं भगवद्गीतायां भारतीयदर्शनविभागानां स्थानमेव विषयः, अतः प्रकृतमनुस्रियते। कुत्रचन कार्ये बहु समालोच्यावश्य कर्तव्यमिति बुद्ध्या प्रवृत्त्यनन्तरमवान्तरदुःखादिभयान्निवृत्तिर्न युक्ता यावदुत्कटदोषदर्शनमित्येव गीतार्थ इति तु परे। उत्कृष्टमपि साधनं स्वाधिकारातीतं मनसाऽपि न स्मर्तव्यमिति नीतिरेव गीतार्थ इति त्वेके। फलचिन्तां विहाय सर्वमपि कर्तव्यं कर्तव्यबुद्ध्या कर्तव्यमेव, फलभारस्तु स्वाराध्यदेवतास्वेव समर्पणीय इति त्वपरः पक्षोऽपि केषाञ्चन। कर्म भक्ति ज्ञानयोगानां स्वरूप-साधनाधिकारि-फलादिनिरूपणमेव गीतार्थ इति तु तत्त्वम् ॥

॥ गीतायाः साक्षाद्भगवदुक्तिता ॥

गीताशास्त्रमिदं पद्मनाभस्य मुखपद्माद्विनिस्सृतमिति स्तुतिमात्रम्, व्यासस्यैवेमानि वाक्यानीति केचन। तेषां दृष्ट्या "अर्जुन उवाचे"त्यादीनि स्वरसानि। भगवदुपदिष्टार्थव्यासीकरणेन व्यास एवास्य कर्तेति केचन। परे तु—वैयासिकत्वेऽपि गीताश्लोकानां केषाञ्चन भगवद्गीतात्वं छत्रिन्यायेन न विरुध्यते, इति भगवत एव वाक्यानि गीता नामेति। अत एव—

"इत्यहं वासुदेवस्य पार्थस्य च महात्मनः।
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥
व्यासप्रसादाच्छ्रुतवानेतद् गुह्यतरं महत्।
योगं योगीश्वरात् कृष्णात्साक्षात्कथयतः स्वयम् ॥
राजन् संस्मृत्य संस्मृत्य संवादमिममद्भुतम्।
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥"

इति गीता । सति चैवं "धृतराष्ट्र उवाचे"त्यादीनामेव वैयासिकत्वम्, भगवदुपदेशानां तु नार्थतः, किन्तु शब्दतोऽनुवादमात्रं व्यासाचार्यस्यैति स्वीकारेऽपि न दोष—इति मन्यन्ते ॥

॥ नारायणं नमस्कृत्येतिश्लोके 'सरस्वतीं चैवे'ति पाठः ॥

सति चैवम्—

"नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥"

इत्येव महाभारतस्यादिमश्लोकपाठः, न तु 'सरस्वतीं व्यासमि'ति । अत्र 'जय'शब्देन महाभारतं विवक्ष्यत इति हि श्रीमदाचार्यशुक्टङ्करमहोदयोऽपि मन्यते, इति महाभारतोपक्रमे निर्विघ्नसमाप्त्यर्थं स्वस्यापि संस्मरणं व्यासेन कर्तव्यतयाऽभिमतमिति कल्पना हि न कथमपि समादरमर्हति, यद्यस्यादिमश्लोकस्य वैयासिकत्वं मन्यते, 'सरस्वतीं चैवे'ति पाठ एव युक्तः, नतु 'सरस्वतीं व्यास'मिति । ततश्च गीतारहस्यटिप्पणे 'सरस्वतीं व्यासमि'त्येव पाठस्साधुरिति समर्थनम्, तन्महिम्ना भगवद्गीताया अपि सर्वस्या व्यासोक्तित्वसमर्थनं चाचार्यशुक्टङ्करमहोदयस्य चिन्त्यमूलमिति प्रतिभाति । अत एव साक्षान्नारायणकर्तृकतयोपनिषत्त्वोपचारो गीतायाः, इति श्लोकरूपेण प्रवृत्तस्यैव श्रीकृष्णार्जुनसंवादस्य महाभारत उपनिबन्धनमात्रं व्यासाचार्यस्य, नतु श्लोकरूपेण रचनमपि, अत एव च वैयासिकत्वव्यपदेशोऽपि गीतायाः । इदमेवाभिप्रेत्य मुम्बईगुजरातीमुद्रणालयप्रकाशितायां भाष्यत्रयोपेतभगवद्गीतायाम्—"धर्मक्षेत्रे" इत्यादीनां धृतराष्ट्रादिवाक्यानामृणरूपेण भगवद्गीतायामवतार इति मन्यते । मद्रपुरानन्दमुद्रणालयप्रकाशितभाष्यत्रयोपेतभगवद्गीताभूमिका तु—'गीता सुगीता कर्तव्ये'त्यादीनां प्रक्षेपमेव योग्यं मन्यते, यत्तु पूर्वोक्तरीत्या गीतोपसंहारश्लोकैरपि विरुध्यते, इति साक्षाद्-भगवद्वाक्यान्येव भगवद्गीता, इति सुष्ठु सङ्गच्छते—'या स्वयं पद्मनाभस्य मुखपद्माद्विनिःसृते"ति ॥

सर्वथा तु बहुतरशास्त्रविस्तराणां सारभूतं गीताशास्त्रम्, उपनिषत्सारभूतं च, इति यथासंभवं सर्वेषां भारतीयानां दर्शनानां तत्र किं वा स्थानमिति विचारो नास्थाने ।

———

# ॥ भगवद्गीता साङ्ख्य-योगदर्शने च ॥

## ॥ द्वितीयं व्याख्यानम् ॥

॥ साङ्ख्यादीनामेव शास्त्रत्वम् ॥

"गीता सुगीता कर्तव्या किमन्यैः शास्त्रविस्तरैः ।
या स्वयं पद्मनाभस्य मुखपद्माद्विनिःसृता ।"

इति हि महाभारतम्। तत्र शास्त्राणि—

"साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।
ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै ॥"

इति वचनात् साङ्ख्यादीनि, इति ब्रह्ममीमांसाद्वितीयाध्यायद्वितीयपाददर्शनेनावगम्यते। तत्र 'साङ्ख्यस्य वक्ता कपिलः' इति वचनसिद्धसाङ्ख्यदर्शनस्योपोद्बलकानि वाक्यानि त्रयोदशाध्यायादिगतानीमानि। तत्र—

॥ गीतायां साङ्ख्यसिद्धान्तोल्लेखः ॥

"पञ्चैतानि महाबाहो कारणानि निबोध मे ।
साङ्ख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥" (१८-१३)

इत्यष्टादशाध्याये 'साङ्ख्ये'पदेन कृतान्तपदसाहचर्यात् साङ्ख्यदर्शनं मन्यत इति गीतारहस्यम्। श्रीशङ्कर-भगवद्रामानुज-श्रीमदानन्दतीर्थादयस्तदनुयायिनश्च तु वेदान्तपरमत्र साङ्ख्यपदमिति मन्यन्ते द्वितीयाध्यायादाविव। तत्र—

"अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
विविधाश्च पृथक्चेष्टाः दैवं चैवात्र पञ्चमम् ॥" (१८-१४)

इति गीतासिद्धान्तः साङ्ख्यदर्शनस्यापि सम्मत एव, इति गीतारहस्यमप्रमाणमिति न हठात् शक्यते वक्तुम्, यावत् प्रबलो विरोधो नोपलभ्यते, इति श्रीमद्रामानुजादिमत इव प्रत्यगात्मज्ञानमेव ज्ञानयोग इति विवक्षायां गीतायां साङ्ख्यदर्शनमपि विशिष्टं स्थानं लभत इति वक्तव्यम्। प्रत्यगात्मस्वरूपं तु भगवद्रामानुजमतं साङ्ख्यमतं च नैकमिति त्वन्यदेतत् ॥

॥ साङ्ख्यदर्शनेऽपि कर्म-भक्तियोगसत्त्वेऽपि तत्र विशेषः ॥

तत्रापि—"दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः ।" इति यागीयहिंसादोषत्वमात्रे विवादेऽपि कर्मयोगस्यापि प्रामाण्यं मन्यत एव तन्मते। ईक्षत्यधिकरणपूर्वपक्षावसरोक्तरीत्योपासनामार्गोऽपि

तत्र सम्मत एव। इयान् विशेषः—उपास्यस्येश्वरस्यासत्त्वेऽपि न दोष इति साङ्ख्यमतम्, मीमांसकमत इव—इति। अतो भक्तियोगस्याप्यस्त्येवावकाशः। वस्तुतस्तु—पश्वादिहिंसादोषत्वमपि गीतासंमतमेव ; युद्धमात्रे हिंसायाः समर्थनात् , इति पिष्टपशुयागपरत्वमेव शान्तिपर्वव्यस्थापितं गीताभिमतमिति कल्पनायामपि न दोषः। पिष्टमयदुर्योधनादिवधेन न युद्धसिद्धिरित्येव गीतार्थ इति तु साङ्ख्याद्यभिप्रायः, इति साङ्ख्यदर्शनदृष्ट्याऽपि योगत्रयव्यवस्थाऽत्र न विरुध्यते ॥

॥ साङ्ख्यप्रक्रियाणां विशिष्टानां गीतायां निर्देशः ॥

साङ्ख्याभिमतपरिणामवाद एव गीताभिमतः, नत्वारम्भवाद इति "नासतो विद्यते भावो नाभावो विद्यते सतः।" इति श्लोकेन सत्कार्यवादसमर्थनेनावगम्यते। तत्र सत् प्रधानमेव, नतु चेतनं ब्रह्मेतिवादस्तु ईक्षत्यधिकरणन्यायेनानुमानिकाधिकरणन्यायेन च निरसनीयः, परं तु नात्र तन्न्यायस्यास्ति प्रसर इति समयान्तरे विचारयिष्यते। आत्मत्वमुपचारादेव, न तु प्राधान्येनेति तदीया प्रक्रिया तु नात्र कुत्रापि निरस्ता ब्रह्मसूत्रेष्विव। "ब्रह्मसूत्रपदैश्चैव" इति तु ज्ञेयप्रत्यगात्मतत्त्वप्रतिपादनावसर एव वर्तते, नतु कारणात्मस्वरूपावसरे, इति साङ्ख्याभिमतपरिणामवादो गीतायां सत्कार्यवादाख्य एव वर्तते, इति कथ गीतायां न साङ्ख्यवादः ? तथाच साङ्ख्यकारिका—"असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात्। शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम् ॥" इति ॥

आत्मभेदादिकमपि तदीयसिद्धान्तसिद्धं गीतायां वर्तत एव। तथाहि—"न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः।" इति साक्षादात्मभेदः प्रतिपाद्यत इति द्वैत-विशिष्टाद्वैतादिमतवदेवात्रापि मन्यते। अत्र तु—अहंपदेन श्रीकृष्णोऽपि मुक्तपुरुषो जीवात्मैव मन्यते, नतु परमात्मा नाम कश्चन। अत एव "वृष्णीनां वासुदेवोऽस्मी"ति विभूतित्वेनोल्लेखः, वृष्णीनामिति निर्धारणषष्ठीबलेन निर्धार्यमाणानां जीवत्वम् विशिष्य तु अहंपदेन तत्र तत्र श्रीकृष्णस्य निर्देशश्चोपपद्यते। अयं हि मुख्यार्थो जीवातिरिक्तभगवत्स्वीकारे न युज्यते कस्मिन्नपि मते साङ्ख्यमतातिरिक्ते, इति सामान्यतः साङ्ख्यमतस्य गीतायां व्यवस्था। अतएव त्रयोदशाध्याये, यत्र—

"क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत।" (१२-२)

इति क्षेत्रज्ञस्वरूपं भिन्नभिन्नं शरीराद्विलक्षणं बोध्यते। शरीरं चेदं समष्टिरूपम्—

"महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥" (१३-५)

इति पञ्च तन्मात्राणि, पञ्च भूतानि, दशेन्द्रियाणि, मनो-बुद्ध्यहङ्काराः, अव्यक्तं चेति चतुर्विंशतितत्त्वरूपमेव सङ्गृहीतम्। तत्र पञ्चविंशतत्त्वमात्मस्वरूपं प्रत्यगात्मरूपमेव क्षेत्रज्ञपदवाच्यं 'ज्ञेयं यत्तत्प्रवक्ष्यामि' इति प्रतिपाद्यते, यस्यासङ्गत्वं निर्गुणत्वमकर्तृत्वं भोक्तृत्वं च।

"असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ।" (१३-१४)

"ज्योतिषामपि यज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य निष्ठितम् ॥" (१३-१७)

"कार्य-कारणकर्तृत्वे प्रकृतिर्हेतुरुच्यते ।
पुरुषः सुख-दुःखानां भोक्तृत्वे हेतुरुच्यते ॥" (१३-२०)

इति गीतावचनान्यत्रानुसन्धेयानि, येषु पुरुषस्याकर्तृत्वम्, भोक्तृत्वं च सांख्याभिमतं व्यवस्थाप्यते। अत एव—

"क्षेत्र-क्षेत्रज्ञसंयोगाद्विद्धि त्वं भरतर्षभ ॥" (१३-२६)

"यावत्सञ्जायते किञ्चित्सत्त्वं स्थावरजङ्गमम् ।"

"प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।
यः पश्यति तथाऽऽत्मानमकर्तारं स पश्यति ॥" (१३-२९)

इति वचनानि। चतुर्दशाध्याये—सत्त्वादिगुणलक्षणं साङ्ख्यप्रतिपादितमेव प्रतिपाद्यते। "तत्र सत्त्वमि·" (१४-५-२०)त्यादिना गुणत्रयातीतत्वमेव मुक्तत्वमित्यपि साङ्ख्यमतमेव। पञ्चदशाध्याये—

"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥" (१५-१६)
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ॥ (१५-१७)

इत्यपि तदनुगुणमेव, येन प्रकृत्यविविक्ताज्जीवात् प्रकृतेश्च जीवस्य शुद्धस्य विवेकः प्रतिपाद्यते। पुरुषोत्तमशब्दनिर्वचनमपि तदभिप्रायमेव। तृतीयाध्यायेऽपि—

"प्रकृतेः क्रियमाणानि गुणैः कर्माणि पश्यतः ।
अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते ॥" (३-२७)

"तत्त्ववित्तु महाबाहो गुण-कर्मविभागयोः ।
गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ॥" (३-२८)

"इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।
मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥ (३-४२)
एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ।
जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥" (३-४३)

इत्यत्र सा प्रक्रिया प्रतिपाद्यते। ब्रह्मसूत्र आनुमानिकाधिकरणपूर्वपक्षदर्शनेनापि ज्ञायतेऽयमर्थः। इयान्

विशेषः—यत् , तत्र कठवल्लीवाक्यान्येतत्सदृक्षाणि विषयः, न्यायसाम्यात्तु इदमपि वाक्यं विषय एव। तत्र 'बुद्धेरात्मा महान् परः' इति जीवात्मनो महत्त्वं प्रतिपादितम्, अव्यक्तं तु सूक्ष्मशरीरमिति व्यवस्थापितम्। अत्र त्वात्मनैव प्रकरणसमाप्तिरिति तु विशेषः, इति नात्र सिद्धान्तन्यायस्य प्रवृत्तिरिति साङ्ख्यप्रक्रियायामेव स्वारस्यम् ॥

॥ योगसमुच्चितस्यैव साङ्ख्यस्य गीतायां स्थानम् ॥

तत्र साङ्ख्यस्यात्मप्रतिपत्तावुपयोगस्तु "नित्यो नित्यानां—चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्। तत् कारणं साङ्ख्ययोगाभिपन्नं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥" इति श्वेताश्वतरोपनिषदाऽप्यवगम्यते, किन्तु योगसमुच्चयेन, नतु प्रत्येकं स्वतन्त्रतयेति केवलसाङ्ख्यपर्यवसानं न वैदिकदर्शनस्य। अतोऽस्यापि वैदिकत्वनिर्वाहार्थं योगसमुच्चयपक्ष एव गीताचार्याभिमत इति प्रतीयते। अत एव—

"यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ (२-६०)
तानि सर्वाणि संयम्य युक्त आसीत मत्परः।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥" (२-६१)
"इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥ (२-६७)
तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥" (२-६८)

इति द्वितीयाध्याये कर्मयोगप्रसङ्गेऽपि योगमार्ग उपक्षिप्यत उपसंहारविधया। तृतीयाध्याये—

"कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्।
इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ॥ (३-६)
यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन।
कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥" (३-७)
"इन्द्रियस्येन्द्रियस्यार्थे राग-द्वेषौ व्यवस्थितौ।
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥" (३-३४)
"तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ।
पाप्मानं प्रजहि ह्येनं ज्ञान-विज्ञाननाशनम् ॥" (३-४१)

इति स एव विशेषतो विविच्यते । तुरीयाध्याये तु—

"सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ (४-२७)
द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथाऽपरे ।
स्वाध्याय-ज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ (४-२८)
अपाने जुह्वति प्राणं प्राणेऽपानं तथाऽपरे ।
प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥" (४-२९)
"अपरे नियताहाराः प्राणान् प्राणेषु जुह्वति ॥" (४-३०)

इति योगाङ्गप्राणायामो विविच्यते । पञ्चमाध्याये —

"सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी ।
नवद्वारे पुरे देही नैव कुर्वन् न कारयन् ॥" (५-१३)
"इहैव तैर्जितः स्वर्गो येषां साम्ये स्थितं मनः ।" (५-१९)
"यतेन्द्रिय-मनो-बुद्धिर्मुनिर्मोक्षपरायणः ।
विगतेच्छा-भय-क्रोधो यस्सदा मुक्त एव सः ॥" (५-२८)

तथा षष्ठाध्याये च—

"यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।
सर्वसंकल्पसंन्यासी योगारूढः स उच्यते ॥" (६-४)
"ज्ञान-विज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।
युक्त इत्युच्यते योगी समलोष्ट्राश्म-काञ्चनः ॥" (६-८)
"योगी युञ्जीत सततमात्मानं रहसि स्थितः ।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥ (६-१०)
शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चेलाजिन-कुशोत्तरम् ॥ (६-११)
तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥" (६-१२)

"यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।
निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥ (६-१८)
यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
योगिनो यताचित्तस्य युञ्जतो योगमात्मनः ॥ (६-१९)
यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति ॥ (६-२०)
सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥ (६-२१)
यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते ॥ (६-२२)
तं विद्याद् दुःखसंयोग-वियोगं योगसंज्ञितम् ।
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ।" (६-२३)
"युञ्जन्नेवं सदाऽऽत्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥ (६-२८)
सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ।" (६-२९)

इत्यादिना योगमार्ग एवाधिको दृश्यते । सप्तमाध्याये—

"मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रयः ।
असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥" (७-१)

अष्टमाध्याये—

"प्रयाणकाले मनसाऽचलेन भक्त्या युक्तो योगबलेन चैव ।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यम् ॥"(८-१०)
"सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
मूर्ध्न्याधायाऽऽत्मनः प्राणमास्थितो योगधारणाम् ॥" (८-१२)

एकादशाध्याये—

"योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥" (११-४)

"दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम्।" ( ११-८ )

"एवमुक्त्वा ततो राजन् महायोगेश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥" (११-९)

"मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात् ।
तेजोमयं विश्वमनन्तमाद्यं यन्मे त्वदन्येन न दृष्टपूर्वम् ॥"(११-४७)

तथा द्वादशाध्याये च—

"एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ (१२-१)
मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥" (१२-२)

"ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥" (१२-६)

"अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय ॥" (१-२४)

इति योगप्रक्रिया विशेषतस्तत्र तत्रालोच्यन्ते ॥

त्रयोदशाध्यायादिकं तु—साङ्ख्य योगदर्शनयोर्विशेषतो व्यवस्थापक तदीयप्रत्यगात्मज्ञानयोगादिविवेचनेनेति सर्वविदितम् ॥

॥ योगसंमतेश्वरकारणतावादः, रसोऽहमिति तादात्म्यव्यपदेशोपपत्तिश्च ॥

अत एव "एतद्योनीनि भूतानि सर्वाणीत्यवधारय ॥" इति प्रकृतिकारणतामात्रेणेश्वरकारणत्वं योगाभिमतं गमयति । "रसोऽहमप्सु कौन्तेय" इति केवलनिमित्तकारणत्वेऽपीश्वरस्य केवलनिमित्त कारणस्यापि सर्वप्रपञ्चाधारत्वात्तादात्म्यव्यपदेश इति विज्ञानभिक्षुप्रक्रियया तादात्म्यव्यपदेशोऽपि तत्र तत्र न योगमार्गविरोधी ॥

॥ अनुगीतास्वारस्यं गीताया योगतात्पर्ये ॥

अत्रोनविंशाध्यायमारभ्य प्रवृत्ते ब्राह्मण ब्राह्मणीसंवादेऽनुगीतापर्वण्यश्वमेधपर्वान्तर्गते चतुस्त्रिंशाध्याये—

"मनो मे ब्राह्मणं विद्धि बुद्धिं विद्धि तु ब्राह्मणीम् ।
क्षेत्रज्ञ इति यश्चोक्तः सोऽहमस्मि धनञ्जय ॥"

इति प्रकृतिविविक्तात्मन एव मुख्यात्मत्वमिति योगप्रक्रियैव गीतार्थ इति विशदीक्रियते । श्रीकृष्णोऽपि तत्र

तत्र योगीश्वरत्वेन विभूतित्वेन च निर्दिश्यमानो मुक्तः, परमयोगी वा प्रत्यगात्मपदवाच्यो जीव एव। अत एवानुगीतायाम् सप्तदशाध्यायेऽनुगीतोपक्रमेऽश्वमेधपर्वणि—

"श्रावितस्त्वं मया गुह्यं ज्ञापितं च सनातनम्।
धर्मस्वरूपिणं पार्थ सर्वलोकांश्च शाश्वतान्॥
अबुद्ध्या नाग्रहीर्यत्त्वं तन्मे सुमहदप्रियम्।
न च साऽद्य पुनर्भूयः स्मृतिर्मे संभविष्यति॥
नूनमश्रद्दधानोऽसि दुर्मेधा ह्यसि पाण्डव।
न च शक्यं पुनर्वक्तुमशेषेण धनञ्जय॥
परं हि ब्रह्म कथितं योगयुक्तेन तन्मया।"

इति वचनानि श्रीकृष्णस्य परमयोगीश्वरत्वम्, साधारणमनुष्यवद्विस्मरणाद्युपन्यासेन केवलं जीवेष्वेवान्यतमत्वं च गमयन्ति। गीतायां सर्वत्र प्रसङ्गेषु 'योगीश्वरः' इतिपाठमेव प्रत्यभिज्ञादर्शनानुसारिणोऽभिनवगुप्ताचार्यादयः, श्रीरामकण्ठाचार्याश्च स्वीकुर्वन्ति। शङ्करभगवत्पादा अपि 'योगेश्वर' इति पाठमेवोरीकुर्वाणा अपि योगोऽस्यास्तीति योगेश्वरपदव्युत्पत्त्या योगीश्वरपाठं मनसाऽनुमोदन्त एव, इति सामान्यतः सर्वेषामध्यायानां योगमात्रोल्लेखमात्रेण योगमार्गे पर्यवसानं गीताया न विरुद्धमित्यवगम्यते। विशेषतस्तु—

"योगी युञ्जीत सततमात्मानं रहसि स्थितः।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः॥" (६-१०)

इत्यादिना यम-नियमासनसहितसंप्रज्ञातसमाधिमहिम्नाऽसंप्रज्ञातसमाधौ पर्यवसानं प्रतिपाद्यते॥

॥ योगासाधारणप्रक्रियाणां कासाञ्चन गीतायां सम्बन्धप्रकारः॥

अत्र—

"युञ्जन्नेवं सदाऽऽत्मानं योगी नियतमानसः।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति॥" (६-१५)

इति षष्ठाध्याये समाधिद्वयोल्लेखः प्रमाणम्। अत्र 'मत्संस्थे'ति योगमतेऽसंप्रज्ञातसमाधिवशेनात्मसाक्षात्कार इति पक्षोऽपि मन्यते, योगस्यैवात्मसाक्षात्काररूपत्वं वा। तत्र चेश्वरप्रणिधानं साधनमिति तन्मतम्, इति त्रयोदशाध्याये—"मयि चानन्ययोगेन भक्तिरव्यभिचारिणी॥" (१३ १०) इति तत्साधनताप्रतिपादनात्तदेकवाक्यताऽप्यवगम्यते। सति चैवं योगवासिष्ठे—'द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघव।' इति प्रतिपादितक्रमद्वय एव गीतायास्तात्पर्यम्। अत्र कर्मयोगः स्वतन्त्रः प्रथमषट्कार्थः, द्वितीय-तृतीयषट्कौ तु ससाधनयोगमात्रनिरूपणार्थाविति विवेकः। अत्र च जीवेश्वरयोरंशांशिभावो मन्यत इति विभूत्यध्यायतोऽव-

गम्यते। निरीश्वरसाङ्ख्यात् सेश्वरसाङ्ख्ययोगमतस्यायमेव विशेषः। अत्र हि द्रव्ययज्ञाद् ज्ञानयज्ञस्य विशेषो वर्तत इति तु चतुर्दशाध्यायतोऽवगम्यते। अत एव "ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनामि"ति-मार्गद्वयविभजनम्। "एकं साङ्ख्यं च योगं च यः पश्यति स पश्यति।" (५-५) इति साङ्ख्य-योगसमुच्चयस्तु फलैक्याभिप्रायेण। साङ्ख्य-योगयोर्वस्तुगत्यैकत्वं—"एतेन योगः प्रत्युक्तः" इति साङ्ख्यप्रक्रियानिरसन-न्यायस्यैवात्रावलम्बनेनापि विज्ञायते। अत एव—"साङ्ख्य-योगौ पृथग् बालाः प्रवदन्ति न पण्डिताः" (५-५) इति॥

॥ साङ्ख्ययोगतात्पर्य एव भगवतः सारथित्वकल्पनायाः स्वारस्यम्॥

अतः साङ्ख्य-योगयोरुभयोरपि स्वतन्त्रदर्शनयोरपि वैदिकत्वमपि ब्रह्मसूत्रेषु तत्र तत्र मत्वा पूर्वपक्षादि-व्यवस्थाऽपि न सर्वथा निर्मूला। तयोरपि वैदिकत्वम्, तयोरेव वा वैदिकत्वमभिप्रेत्यैव—"आत्मानं रथिनं विद्धि" इति श्रुत्येकवाक्यतया बुद्धिस्थानत्वं भगवतो वासुदेवस्येति प्रकृते पक्ष एवोपपद्यते। अत एव भगवतः सारथित्वं गीतायाम्। तेन च 'द्वा सुपर्णे'तिवाक्यैकवाक्यताऽपि पैङ्गिरहस्यब्राह्मणावगतार्थमादायोपपद्यते, इति साङ्ख्यतत्त्वप्रतिपादन एव गीतायास्तात्पर्यम्—यदि निरीश्वरसाङ्ख्यवादो बुद्ध्यतिरिक्तेश्वरानङ्गीकारेण, अन्यथा तु योगमार्गः, यत्र प्रणिहितेश्वरप्रसादेनैव मोक्षः, बुद्धित्वकल्पना चेश्वरस्य, इति साङ्ख्य-योगयोर्गीतातात्पर्यमनाबाधमेव॥

---

# ॥ भगवद्गीता पाञ्चरात्रदर्शनं च॥

## ॥ तृतीयं व्याख्यानम्॥

॥ गीतायां कतिचन पाञ्चरात्रप्रक्रियाः॥

पाञ्चरात्रसिद्धान्ते हि श्रीभाष्यकारादिमत इव जीवस्याणुपरिमाणत्वम्, परमात्मनश्चिदचिच्छरीरकत्वम्, स्वशरीरप्रकृतिसूक्ष्मचिदुपादानत्वमात्रेणैव ब्रह्मणोऽप्युपादानत्वव्यपदेशमात्रम्, नारायणपरमात्मतावादः, शुद्ध-प्रत्यगात्मज्ञानस्यैव ज्ञानयोगत्वम्, तस्य कर्मयोगस्य च भक्तियोगाख्यदर्शनसमानाकारोपासनाद्युपकारकत्वादि-नोपयोगः, जीवानामुत्पत्तिः, जीवानामहमर्थमुख्यात्मनां मुक्तावप्यनुवृत्तिः, जीवभेदः, परमात्मसाधर्म्यमेव मुक्तौ, नतु सर्वात्मना तदैक्यम्, अवताराणां व्यूहानामिव स्वरूपांशत्वम्, यागीयहिंसाया दुष्टत्वेन पिष्टपशुयाग-स्यैवार्षस्य साधुत्वादीनि च यानि बहूनि स्वीक्रियन्ते, तानि सर्वाणि भगवद्गीतायामपि दृश्यन्ते, इति पश्यामः पाञ्चरात्रदर्शनमेव भगवद्गीतायां वर्तत इति॥

॥ गीतायां जीवाणुपरिमाणता ॥

तत्र जीवाणुपरिमाणतायां प्रमाणम्—

"उत्क्रामन्तं स्थितं वाऽपि भुञ्जानं वा गुणान्वितम् ।
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥" (१५-१०)

इति गीतावाक्यमेव । नहि सर्वगतत्वे जीवात्मन उत्क्रान्तिरुपपद्यते, इत्यणुपरिमाणत्वमस्यावसीयते ॥

अत्र भगवद्रामानुजाचार्याः—उत्क्रामन्तं भुञ्जानं वा जीवं सर्वावस्थमपि ज्ञानैकाकारं ज्ञानचक्षुष एव पश्यन्तीति—व्याचक्षते । ब्रह्मानन्दगिरिरपि—सर्वावस्थासु दर्शनयोग्यमपि देहात्मविमोहग्रस्ता नानुपश्यन्ति, ज्ञानचक्षुषस्तु शास्त्राचार्योपदेशलब्धदेहात्मविवेकाः पश्यन्तीति—व्याचष्टे । श्रीमध्वाचार्यास्तु—इमं श्लोकं जीवान्तर्यामिविषयम्—व्याचक्षते । अमृततरङ्गिणी तु—श्रीवल्लभानुयायिनी मुख्यं जीवं ज्ञानचक्षुष एव पश्यन्तीति—विवृणुते । सर्वथा तु—जीवाणुपरिमाणतायां न विवादः । ब्रह्मानन्दगिरिस्तु यद्यपि संविद्रूपमात्रं ज्ञानचक्षुषः पश्यन्तीति—मन्यते ; तथाऽपि तत्रोत्क्रामन्तमित्याद्यन्वयो न लगति, इति भगवद्रामानुजाभिमतं विवरणमेवात्र शरणीकर्तव्यमिति जीवाणुता पाञ्चरात्राभिमतैव गीतायां वर्तत इति स्वीकर्तव्यम् ॥

॥ गीतायां चिदचिच्छरीरकब्रह्मतावादः ॥

चिदचिच्छरीरकत्वं तु परमात्मनः पाञ्चरात्राभिमतं गीतायां विशदमेव—

"मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ (९-४)

इत्यत्र । अत्र हि—"अव्यक्तमूर्तिना" इति पदं भगवत्पादैः—करणागोचरस्वरूपेणेति व्याख्यायते, यत्र ब्रह्मण एवोपादानत्वमपि मन्यते, न प्रकृतिमात्रस्य । भगवद्रामानुजाचार्यैस्तु—अप्रकाशितस्वरूपेणेति, यत्रान्तर्यामितामात्रं मन्यते, इति चिदचिच्छरीरकता तात्पर्यविषयः । अत एवात्र—अन्तर्यामिब्राह्मणादिप्रमाणोपन्यासः । एतन्मते हि—प्रकृतेरेवोपादानत्वं परिणामितया, नतु ब्रह्मणोऽपि केनापि रूपेण साक्षात् । अत एव—

"सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ (९-७)
प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥" (९-८)
"मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनाऽनेन कौन्तेय जगद्विपरिवर्तते ॥" (९-१०)

इति भगवद्गीता। अत्र भगवत्पादमते प्रकृतेर्मदीयत्वमात्रं मन्यते परमात्मना, भगवद्रामानुजमते तु—तच्छरीरत्वमिति विशेषः। मतद्वयेऽपि प्रकृतिपरिणामत्वमेव प्रपञ्चस्येति समानमिति चिदचिच्छरीरकतायामेव गीतातात्पर्यम्। यदा तु—"अव्यक्तमूर्तिना" इतिपदमव्यक्तपदस्य प्रकृत्यर्थत्वं मूर्तिपदस्य शरीरपरत्वं च मत्वाऽव्यक्तशरीरमित्येव व्याख्यायते ; मूर्तिपदाव्यक्तपदयोः स्वारस्यात्, तदा प्रकृतिशरीरकतैव "मया ततमि"त्यादौ मुख्यार्थ इति पाञ्चरात्रसिद्धान्त एव श्रीभाष्याचार्यमते गीतायाः परमं तात्पर्यमित्यवचनसिद्धमिदम्। अत एव—"मयाऽध्यक्षेणे"ति नियामकापरपर्यायस्याध्यक्षपदस्य प्रयोगः। अद्वैतमते तु—

"मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्।
हेतुनाऽनेन कौन्तेय जगद्विपरिवर्तते॥" (९-१०)

इति प्रकृतिमात्रोपादानतोपन्यासो नोपपद्येत॥

॥ गीतायां जीवानां भिन्नांशत्वं व्यूहानां स्वरूपांशत्वं च॥

अत एव—ब्रह्मण उपादानत्वव्यपदेशमात्रं प्रकृत्यपृथक्सिद्धिमात्रेण, नतु स्वरूपतोऽप्युपादानत्वमित्यपि व्याख्या भवति। अत्र—अव्यक्तपदस्वारस्यात् कारणत्वं सूक्ष्मचिदचिच्छरीरकत्वेनैव, स्थूलचिदचिच्छरीरकत्वेन तु कार्यत्वमेवेति सूच्यते। अत एव—

"अव्यक्ताद् व्यक्तयः सर्वाः प्रभवन्त्यहरागमे।
रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके॥" (८-१८)

इति सूक्ष्मचिदचिच्छरीरकार्यत्वं स्थूलचिदचिच्छरीराणां प्रतिपाद्यते॥

॥ गीतायां प्रकृत्यपृथक्सिद्धिमात्रेण ब्रह्मोपादानतावादः॥

अस्मिन् मते—जीवानामपि स्थूलचिच्छरीरकब्रह्मरूपत्वेऽपि प्रकृतिपरवशत्वाद् भिन्नांशत्वम्, अवताराणां व्यूहानां वा स्वरूपांशत्वमिति विभागोऽपि—

"अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः।
परं भावमजानन्तो ममाव्ययमनुत्तमम्॥" (७-२४)
"यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥" (१५-१८)

इत्यादिषु विशद एव। अद्वैतमते तु नैतदुपपद्यते॥

॥ गीतायां वासुदेवपरमात्मतावादः ॥

अत एव—नारायण एव परमात्मेति वादोऽपि—व्याख्यातः। नारायणावतारस्य श्रीकृष्णस्यैव परभाव पुरुषोत्तमत्वादीनामत्र प्रतिपादनात्। एतेन—"वृष्णीनां वासुदेवोऽस्मी"ति वासुदेवस्य विभूतिमध्ये प्रवेशोऽपि—व्याख्यातः ; परभावाविनाभूतविभूतित्वस्याबुद्धिमत्पुरुषदृष्ट्या वा विभूतित्वस्यैवात्र विवक्षणात्। अत एव—

"बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः॥" (७-१९)

इति वासुदेवसर्वात्मत्वज्ञानमेव मुक्तिसाधनं मन्यते। अन्यत्र तु नैतदुपपद्यते। भगवत्पादास्तदनुयायिनोऽन्ये च वासुदेवपदेनात्र सर्वात्मैव विवक्ष्यते—"सर्वं खल्विदं ब्रह्म" "ब्रह्मैवेदं सर्वम्" "आत्मैवेदं सर्वम्" "सकलमिदमहं च वासुदेवः" इत्यादिवचनैकवाक्यतानुसारेणेति मन्यन्त एव, इति पाञ्चरात्राभिमतनारायणपरमात्मतावाद एव गीतार्थः, नतु सदाशिवपरमात्मतावादः, निर्विशेषवादो वा॥

॥ गीतायां पाञ्चरात्राभिमतो ज्ञानयोग एव ॥

एतेन—ज्ञानयोगपदार्थोऽपि—व्याख्यातः ; शुद्धाहमर्थरूपप्रत्यगात्मज्ञानस्यैव ज्ञानयोगाध्यायार्थत्वात्। "ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते" इत्यादीनां प्रत्यगात्मपरत्वे तु न कस्यापि विवादः। इयान् विशेषः—संविन्मात्रं प्रत्यगात्मेत्यद्वैतिनो मन्यन्ते, श्रीभाष्यानुयायिनः पाञ्चरात्रानुयायिनो वा तु मुख्योऽहमर्थ एव प्रत्यगात्मेति। तत्र—"निर्गुणं गुणभोक्तृ" "ज्ञानं ज्ञेयं ज्ञानगम्यं सर्वस्य हृदि विष्ठितम्" इत्यादिना प्रत्यगात्मक्षेत्रज्ञस्वरूपनिरूपणमेव स्वरसतोऽवगम्यते, नतु संविन्मात्रनिरूपणम्। यस्तु त्रयोदशाध्याये क्षेत्रकोटावहंकारस्यापि निर्देशः, स तु नाहमर्थान्तर्गताहंकाराभिप्रायः, किन्तु गर्वादिवृत्त्युपहितान्तःकरणमात्राभिप्रायः इति नाहमर्थातिरेकः क्षेत्रज्ञस्य गीतातात्पर्यविषयः॥

॥ गीतायां भक्तियोगप्राधान्यम् ॥

अत्र कर्मयोग-ज्ञानयोगयोर्न मुख्यत्वम्, किन्तु भक्तियोगस्यैव। तत्रैव "वासुदेवः सर्वमि"ति ब्रह्मणो विषयीकरणस्य विवक्षणेन "ब्रह्मविदाप्नोति परम्" इत्यादिवाक्यसिद्धमोक्षसाधनब्रह्मज्ञानरूपताया गीतायां व्यवस्थापनात्, प्रत्यगात्मनस्तच्छरीरतया तन्नियम्यत्वेन च तज्ज्ञानस्य परमात्मज्ञानोपयोगितयैव तत्र प्रतिपादनाच्च। कर्मयोगस्तु नतु मुख्यमधिकारिणमधिकरोति, किन्तु अत्यन्ताशक्तमेव। अत एव—

"मय्येव मन आधत्स्व मयि बुद्धिं निवेशय।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः॥ (१२-८)

अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम्।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय ॥ (१२-९)
अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव।
मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि ॥ (१२-१०)
अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥" (१२-११)

इति द्वादशाध्याये भगवद्गीता। अनया हि न कर्मयोगे पर्यवसानं गीतायाः, किन्तु तत्साध्ये भक्तियोग एवेति विशदमेव। संमतं चैतत् श्रीवल्लभानुयायिनामपि, ये तु पाञ्चरात्रप्रामाण्यं नोरीकुर्वन्ति ॥

॥ गीतायां पाञ्चरात्राभिमतपशुहिंसादोषता ॥

एतेन—यागीयपशुहिंसादोषवशेन पिष्टपशुयागव्यवस्थापि पाञ्चारात्राभिमता—व्याख्याता। शान्तिपर्वणि हि (३३७ अध्याये) देवानामृषीणां च पशुहिंसादोषत्वादोषत्वविषये विवादे, उपरिचरवसुना महर्षीणां तद्दोषत्वपक्ष एव व्यवस्थापित इत्यादि विशदमेव, इति सर्वेषां महर्षीणां मते यागीयहिंसाया दोषत्वमिति गम्यते। "अशुद्धमितिचेन्न शब्दादि"ति पशुहिंसाया अदोषत्वव्यवस्थापनं तु व्यासस्यैकस्यैव मतम्, नतु सर्वेषामपि। अथवा वैदिकमताभिप्रायं वैयासिकं सूत्रम्, नतु पाञ्चरात्राभिप्रायम्। गीता तु पूर्वोक्त प्रकारेण पाञ्चरात्रसिद्धान्तमेवाभिप्रैतीति यागीयहिंसाया अदोषत्वं न गीताया अपि संमतमिति शक्यते वक्तुम् ॥

वस्तुतस्तु—पूर्वोद्धृतशान्तिपर्वाविरोधार्थम्—"अशुद्धमिति चेन्न शब्दादि"ति सूत्रं क्षत्रियधर्मयुद्धादि दृष्टार्थधर्माभिप्रायमेव मन्तव्यम्। अत एव—प्रस्थानत्रयस्याप्येकवाक्यता भवति; अन्यथा बादरायणाचार्याणां 'मनस्यन्यद् वचस्यन्यदि'ति समापद्येत। अदृष्टार्थेषु हि यागेषु पिष्टपशुयागेनापि फलसिद्धिर्न विरुध्यते; वाचनिकत्वात्। अत एव न्यायः—"किमिव वचनं न कुर्यान्नास्ति वचनस्यातिभारः" इति। नैवं दृष्टार्थेषु युद्धादिषु। एतेन—चिकित्साङ्गशस्त्रप्रक्रियादृष्टान्तेन यागीयहिंसाया अदोषत्वव्यवस्थापि—परास्ता; वैधर्म्यात्। सति चैवम्—भगवद्गीतायां युद्धादिहिंसोपदेशो दृष्टार्थक्षत्रियादिनियतधर्माभिप्राय एव, नतु धर्मसामान्याभिप्रायः। गीतायाः क्षत्रियधर्मयुद्धकर्तव्यताऽकर्तव्यतानिर्धारणार्थमेव हि प्रवृत्तिः, नतु सर्वत्र हिंसायाः कर्तव्यत्वस्य, क्षत्रियेतरविषये तत्कर्तव्यत्वस्य वा निर्धारणार्थम्, इति पाञ्चरात्राभिमतयागीयहिंसादोषतायामेव गीताया अपि तात्पर्यम्। सामान्यतः पाञ्चरात्रप्रक्रियानुसारेण युद्धस्यापि हिंसारूपत्वादकर्तव्यत्वबुद्धिमर्जुनस्यापवदितुमपवादविधयैव हि गीताशास्त्रं प्रवृत्तमिति सुष्ठु लगति। अन्यथा युद्धमात्रे हिंसाया अदोषत्वमत्र व्यवस्थापितमसङ्गतमेव स्यात्। अपवादकारणं चेदमेव—यत् यागादौ पिष्टपश्वादिनेव पिष्टमयदुर्योधनादिनैव युद्धनिर्वाहो न सप्रयोजनतामियात्; राज्यप्राप्त्यसंभवात्, इति युद्धवैयर्थ्यापत्तिरेवेति

गीतातोऽवगम्यते ! इति यागीयहिंसाऽदोषतावादे न गीतायाः, ब्रह्मसूत्राणाम्, वेदस्य वा पाञ्चरात्रैकवाक्यताविरोधात्तात्पर्यमित्यवगम्यते ॥

॥ गीतायां पाञ्चरात्राभिमतजीवोत्पत्तिवादः ॥

जीवोत्पत्तिप्रक्रिया तु पाञ्चरात्र इवात्रापि वर्तत एव । अत एव—"अव्यक्तं व्यक्तिमापन्नमि"ति भगवतोऽवताराणामभ्युत्पत्तिराम्नायते । अन्येषां च जीवानामौडुलोम्यभिमता, पाञ्चरात्राभिमता वोत्पत्तिर्गीतायाम्—

"न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।
न चैव न भविष्यामः सर्वे वयमतः परम् ॥" (२-१२)

इत्यत्राम्नायत एव । अत्र हि प्रायेण—नासमिति न, किन्तु आसम्, न भविष्याम इति न, किन्तु भविष्याम एवेति विवरणं दृश्यते । तत्रासंपदेनातीतत्वं नाशापरपर्यायम्, भविष्यामिपदेन प्रागभावप्रतियोगित्वं च जीवानां प्रतिपाद्यते ; भविष्यतीति प्रतीतिविषयत्वस्यैव प्रागभावप्रतियोगित्वरूपत्वात्, इति जीवोत्पत्तिवादो विशदमेव गीतायां वर्तते । अत एव—"बहूनि मे व्यतीतानि जन्मानि तव चार्जुने"ति गीता । "प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपी"ति वचनं तु प्रकृतिपुरुषसंसर्गानादित्वपरमेव, नतु पुरुषानादित्वपरमपि । अत एव—उभाविति पृथग्निर्देशः । अन्यथा—प्रकृतिं पुरुषं चैवेति चशब्देनैव द्वयोः सिद्धेः, तद्वितथं स्यात्, इति जीवोत्पत्तिप्रक्रियाऽपि केषाञ्चन दृष्ट्या पाञ्चरात्राभिमता चेदपि न दुष्यति । वस्तुतस्तु भगवद्रामानुजाचार्याः—पाञ्चरात्रसिद्धान्तेऽपि जीवोत्पत्तिनिषेध एव वर्तत इति पाञ्चरात्राधिकरणे "विप्रतिषेधादि"ति द्वितीयद्वितीयान्तिमसूत्रविवरणावसरे—प्रतिपादयन्ति, श्रुतप्रकाशिकाकाराश्च तत्र परमसंहितावचनान्यपि—प्रमाणयन्ति । वक्तव्यं चात्र तस्यैव सूत्रस्य भगवत्पादभाष्यविवरणावसरे भाष्यप्रदीपे विशदीकृतमेव । सर्वथा तु पाञ्चरात्रप्रक्रिया गीतायां विशदा ॥

॥ गीतायां पुरुषबहुत्ववादः ॥

अत एव—पुरुषबहुत्ववादोऽपि—व्याख्यातः ; "न त्वेवाहं...न त्वमि"त्यादिना तद्भेदप्रतिपादनात् । यत्तु—क्षेत्रज्ञमित्यादावेकवचनम्, तदिदं ज्ञानैकाकारतया साम्यमादाय । एतेन—"नित्यः सर्वगतः स्थाणुः" इति सर्वगतत्वनिर्देशोऽपि—व्याख्यातः ॥

॥ गीतायां पाञ्चरात्राभिमतभक्तियोगप्राधान्यम् ॥

तदयं निष्कर्षः—"पाशुपत पाञ्चरात्रमतयोर्हि—भक्तिरेव दर्शनसमानाकारतया ज्ञानयोगोऽपि, यदि परमात्मसाक्षात्कार एव साक्षाद् ज्ञानयोग इति मन्येत । वस्तुतस्तु नैवम् ; प्रत्यगात्मनः परिशुद्धस्यैव

हि ज्ञानं ज्ञानयोगो नाम तत्र। जीव-ब्रह्मणोस्तु शरीर-शरीरिभाव एव। इयान् विशेषः—यत्तयोरपि ज्ञानयोगस्य सहकारेणैव मोक्षोपयोग इत्येतन्मतम्, साङ्ख्य योगदर्शनयोस्तु नैवम्। तत्र हि ज्ञानयोगस्य प्रत्यगात्मज्ञानरूपत्वेऽपि स्वतन्त्रयोगत्वाद्भक्तियोगसाधनत्वाभावः, पाशुपतादौ तु विपरीतम् ॥

॥ गीतायां पाञ्चरात्रसिद्धान्तानां संगृह्यमाणानामुपसंहारः ॥

अयं भावः—'क्षरः 'सर्वाणि भूतानि' इति जीवानामुत्पत्ति-विनाशशालित्वप्रतिपादनात्, सप्तमाध्याये—

"भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ (७-४)
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मामिकाम्।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥" (७-५)

इति जडाजडप्रपञ्चस्य सर्वस्य शरीर-शरीरिभावनिबन्धनस्यात्र प्रतिपादनात्,

"एतद्योनीनि भूतानि सर्वाणत्यिवधारय।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥" (७-६)

इति जडाजडकार्याणामेवेश्वरकार्यत्वव्यपदेशमात्रस्य प्रतिपादनात्, "अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः।" इत्यवताराणां वस्तुतो न जन्यत्वमिति प्रतिपादनेन तदतिरिक्तानां जीवानामुत्पत्तिसूचनात्, विशदं च "न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः" इति जीवोत्पत्ति-विनाशप्रतिपादनात्, "क्षेत्रज्ञं चापि मां विद्धि" इति बहुपुरुषनियामकत्वेन योनित्वेन वा परमात्मनो वासुदेवस्य निरूपणात्, "पाञ्चरात्रस्य वक्ता नारायणः स्वयमि"ति नारायणकर्तृकत्वाविशेषात्, क्षत्रियधर्मयुद्धव्यतिरेकेण हिंसाया दोषत्वव्यवस्थापनात्, नारायणैकपरमात्मतावादस्यैव गीतातात्पर्यविषयत्वात्, "अथ चेत्त्वं समाधातुं न शक्नोषी'ति चित्तसमाधानादौ शक्ताधिकारिकत्वव्यवस्थापनपूर्वकम्, अन्ततः "सर्वकर्मफलत्यागं ततः कुरु यतात्मवान्," इत्यशक्तविषयकतायाः कर्मयोगे व्यवस्थापनपूर्वकं च 'मय्येव मन आधत्स्वे'तिभक्तिमार्गस्यैव मोक्षसाधनत्वव्यवस्थापनाच्च पाञ्चरात्रदर्शने गीतायास्तात्पर्यमवगम्यते। मुक्तिस्वरूपे तु परमात्मसाधर्म्यमेव भोगमात्रसाम्यरूपम्, नतु जगद्व्यापारेण साकमपीति "इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः।" (१४-२) इत्यत्र विशदमेव। तदेवं पाञ्चरात्रदर्शनस्य गीतायां स्थानमालोचितम् ॥

———

# ॥ भगवद्गीता पाशुपतदर्शनं च ॥

## ॥ तुरीयं व्याख्यानम् ॥

॥ पाशुपत-द्वैतादिदर्शनानां विशेषे कारणानि ॥

तत्र—'एतद्योनीनि भूतानि' 'अहं कृत्स्नस्य जगतः' इति वाक्ययोः शिवाग्रयभाष्यमूलभूतभैरवागमसूत्रावगतनिमित्तकारणतायामेव तात्पर्यवर्णने, विज्ञानभिक्षुमत इव "मयैवेते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन्" इति परमेश्वरस्यैव कर्तृत्वव्यवस्थापने, प्रतर्दनाधिकरणरीत्या मांपदोपपत्तिप्रतिपादनपूर्वकं "तमेव शरणं गच्छे"ति महेश्वरप्राप्यतायामेव तात्पर्ये च पाशुपतमतम्। अत्रैव नारायणस्यैव परमात्मतावाद एव तात्पर्ये द्वैतमतम्, अन्यथा तु पाशुपतमतम्। अयमेव न्यायः शैवविशिष्टाद्वैतमतपरतया योजनेऽपि, यदनुसारेण श्रीकण्ठभाष्यं श्रीकरभाष्यं च प्रवर्तितम्, काश्मीरशैवदर्शनानि, दाक्षिणात्याघोरशिवाचार्यप्रवर्तितशैवदर्शनानि वा तु पाशुपतमतावलम्बेन। सर्वथा तु शैवदर्शनेऽपि गीतातात्पर्यं न विरुध्यते। आगममूलकानामपि पाञ्चरात्रादीनां वैदिकत्वमपि मन्यत एव। केवलमयं विशेषः—आगमविशेषप्रामाण्यपरतया शास्त्रयोनित्वाधिकरणतात्पर्ययोजनं तत्र तत्र मन्यते॥

॥ श्रीकृष्णस्य जीवत्वे आचार्यत्वे च गीतावाक्यानि ॥

श्रीकृष्णस्य जीवत्वं यदि जीव-परामात्मानौ गुहाधिकरणप्रतिपाद्यौ। श्रीकृष्णस्य जीवत्वे प्रमाणानि—"वृष्णीनां वासुदेवोऽस्मि" इति, अनुगीतायाम्—"श्रावितस्त्वं मया गुह्यं ज्ञापितं च सनातनम्। धर्मस्वरूपिणं पार्थ सर्वलोकांश्च शाश्वतान्। अबुद्ध्या नाग्रहीर्यस्त्वं तन्मे सुमहदप्रियम्। नच साऽद्य पुनर्भूयः स्मृतिर्मे संभविष्यति। नूनमश्रद्दधानोऽसि दुर्मेधा ह्यसि पाण्डव" इत्युपक्रमगतानि च वाक्यानि। अत एव तस्याचार्यत्वम्, अन्यथा तु तस्य बुद्धित्वम्, सारथित्वं वा यदि पैङ्गिरहस्यसिद्धान्तोऽवलम्ब्यते। सर्वथा तु परमेश्वरप्राप्यतायामेव गीतातात्पर्यम्॥

"तद्विष्णोः परमं पदमि"त्यत्र तु विष्णुपदं व्यापकपरमेव। अत एव कठवल्ल्याम्—

"इन्द्रियेभ्यः परं मनो मनसस्सत्त्वमुत्तमम्।
सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम्।
अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च॥

इति व्यापकं चैतन्यमेव विष्णुपदार्थतया मन्यते॥

मांपदं हि गीतायां क्वचिद्भगवत उपदेष्टृत्वेन, क्वचित्प्राप्यत्वेनेति द्वेधा दृश्यते। तत्र—"न त्वेवाहं जातु नासम्" "लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ" "न मे पार्थास्ति कर्तव्यम्" "वर्त एव च कर्मणि" "यदि ह्यहं न वर्तेय जातु कर्मण्यतन्द्रितः।" "उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम्।" "सङ्करस्य च कर्ता स्याम्।" "ये मे मतमिदं नित्यमनुतिष्ठन्ति" "ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम्।" "इमं विवस्वते योगं प्रोक्तवानहमव्ययम्।" "स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः।" "भक्तोऽसि मे सखा चेति।" "बहूनि मे व्यतीतानि जन्मानि तव चार्जुन। तान्यहं वेद सर्वाणि" "तत्ते कर्म प्रवक्ष्यामि।" "ज्ञानं तेऽहं सविज्ञानं वक्ष्यामि" "यदक्षरं वेदविदो वदन्ति...तत्ते पदं संग्रहेण प्रवक्ष्ये।" "इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे।" "भूय एव महाबाहो शृणु मे परमं वचः।" "यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया।" "हन्त ते कथयिष्यामि।" "कथयिष्यामि...आत्मविभूतयः।" "परं भूयः प्रवक्ष्यामि।" "इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ।" "निश्चयं शृणु मे तत्र" "एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च। कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम्।" "सिद्धिं प्राप्तो यथा ब्रह्म तथाऽऽप्नोति निबोध मे।" "सर्वगुह्यतमं भूयः शृणु मे परमं वचः।" "इष्टोऽसि मे सखा चेति ततो वक्ष्यामि ते हितम्।" "मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे।" इत्यत्राचार्यत्वेन निर्देशः, अन्यत्र त्वहं-मामादिशब्देन प्राप्यस्य परमात्मन एवोपदेशः॥

॥ शैवदर्शनानां प्रक्रियाविशेषाः ॥

अयमत्र निष्कर्षः—मुक्तिस्वरूप जीवबहुत्व तदणुत्ववादादौ पाञ्चरात्रसिद्धान्तात् शैव-विशिष्टाद्वैतादि-मतस्य न विशेषलेशोऽपि। प्राप्यस्वरूपमात्रे तु समस्ति विशेषः यतः पाञ्चरात्रमते प्राप्यो नारायणः परमात्मा, शैवमते तु सदाशिवः परमात्मा प्राप्य इति। तत्र बहुषूपनिषत्सु प्राप्यस्वरूपमुपक्रम्येश-महेश्वर-शिव-रुद्रादिपदानां नारायणव्यतिरिक्तपराणां निर्देशात् तासां शैवमते तात्पर्यमिति नियत स्वीकर्तव्यम्। एतन्मते हि— 'कृष्णद्वैपायनोऽपि तन्मूर्तिमाविष्टः परमेश्वर एवे'ति प्रत्यभिज्ञानदर्शनपक्षपातिनां सर्वतोभद्रव्याख्या वदति। तन्मतरीत्या तु परमेश्वरस्य कर्तृत्वमात्रं यन्मन्यते, तदेव "कर्ताऽसि लोकस्य चराचरस्ये"ति वाक्येन प्रतिपाद्यते, यदेव भैरवागमसिद्धमघोरशिवाचार्यादिभिस्तद्भाष्यावसरे प्रतिपाद्यते। तथापीश्वरमायामोहाव-स्थायामेव सर्वमिदं नानात्वेन संसारिणा ज्ञायते, इत्यैन्द्रजालिकवदेव मायामयत्वं मन्यते, न तु मायोपादान-कत्वेनाद्वैतमत इव, इति प्रबुद्धेन संसारस्य बाधे 'शिवोऽहमि'ति प्रत्यभिज्ञानमेव सर्वदा मुक्तिदशायामिति तु प्रत्यभिज्ञानदर्शनाभिप्रायः, यत्र भास्कराद्यभिमतं ब्रह्मण एव परिणामित्वमिति ब्रह्मपरिणामवादो मन्यते। इदं त्वघोरशिवाचार्यादीनां श्रीकण्ठाचार्याणां च न संमतम्। तत्र प्रत्यभिज्ञादर्शनप्रक्रियानुसारेण गीतायां श्रीरामकण्ठाचार्याणाम्, अभिनवगुप्ताचार्याणां च व्याख्या वर्तते, इति तदनुसारित्वे गीताया नासंभवलेशोऽपि। श्रीकण्ठाद्यभिमतशैवसिद्धान्तानुसारेण तु गीताया विवरणमेकमपि न दृश्यत इति तन्मतानुसारेण गीताया

योजनमेवात्र प्रधानतममुद्देश्यम्, यत्र विष्णोरपकर्षः शिवापेक्षया मन्यते, पाञ्चरात्राद्यागमानामप्रामाण्यं च पाञ्चरात्राभिमतपाशुपतागमाप्रामाण्यनिरसनपूर्वकम्। श्रीकण्ठमते तु—"पत्युरसामञ्जस्यादि"ति हि केवल-निमित्तकारणतापरतामसशैवागमाप्रामाण्यनिरासपरं पाञ्चरात्रदृष्टान्तेन। तन्मते हि तेषामपि तामसत्वमेव पतिताधिकारिकत्वं च मन्यत इति शिवार्कमणिदीपिकायां व्यक्तम् ॥

॥ पुरुषसूक्त-ब्रह्मसूत्रादीनां शिवपरता ॥

पुरुषसूक्तमप्येतन्मते शिवप्राधान्यपरमेव। यतः—

"सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।
स भूमिं विश्वतो वृत्त्वाऽत्यतिष्ठद्दशाङ्गुलम्।
पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम्।
उतामृतत्वस्येशानः। यदन्नेनातिरोहति।"

इत्येतावता विष्णोर्नारायणस्य माहात्म्यं प्रतिपाद्य—"एतावानस्य महिमे"ति तन्महिम्नः परिच्छेदं निरूप्य च "ततो ज्यायाँश्च पूरुषः" इति पूर्णः परमात्माऽपर एव प्रतिपाद्यते तुरीयसदाशिवस्वरूप इति शैवा मन्यन्ते पुरुषसूक्ताशयम्। ब्रह्म-विष्णु-शिवातिरिक्ते तुरीय एव पुरुषपदमन्यत्र त्रिपाद्विभूत्युपनिषदादौ व्यक्तम्। माण्डूक्ये तु—"शिवमद्वैतं चतुर्थं मन्यन्ते"इति शिवस्यैव तुरीयत्वं विशदं प्रतिपाद्यते, इत्युभयोरेकत्रोप-संहारेऽवश्यकर्तव्ये शिवाद्वैतवाद एव श्रुत्यारूढोऽवगम्यते ॥

अपरे तु—त्रयो विभूतिरूपा ओंकारावयवाकारोकारमकारार्था ब्रह्म-विष्णु-रुद्ररूपा इत्येव शास्त्रार्थः। ब्रह्मसूत्रमपि—"शब्दादेव प्रमितः" इति सूत्रे ईशानपदेन प्रमितत्वाद् ब्रह्मैव—"अङ्गुष्ठमात्रः पुरुषः"इत्यत्र विवक्षित इति व्यवस्थापयत् सदाशिवब्रह्मतावादमेव श्रौतं मन्यते, इति "अथातो ब्रह्मजिज्ञासा"इति ब्रह्मविचार-प्रतिज्ञाऽपि सदाशिवविचारप्रतिज्ञैवेति स्वीकर्तव्यम्, इति तदेकवाक्यतार्थं गीताया अपि सदाशिवपरब्रह्म-तावाद एव तात्पर्यमुरीकर्तव्यम्। अत एवाष्टादशाध्याये—

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥ (१८-६१)
तमेव शरणं गच्छ सर्वभावेन भारत।" (१८-६२)

इति प्राप्यस्य परमात्मन ईश्वरपदेन 'तमि'ति च गीताचार्याद्युपदेशकाद्विभिन्नतया च निर्देश उपपद्यते। श्रीकृष्णस्त्वत्र मते योगीश्वरः कश्चन जीवन्मुक्तः, आधिकारिकविशेषो वा सदा प्रतिभातपरमात्मस्वरूपः। अत एव—"यत्र योगेश्वरः कृष्णः" "पश्य मे योगमैश्वरम्" (९-५) "परं भावमजानन्तो मम भूतमहेश्वरम्"

(९-११) "द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥" (११-३) "योगेश्वर महाभाग" (११-४) "महायोगेश्वरो हरिः" (११-८) "पश्य मे योगमैश्वरम्" "रूपं परं दर्शितमात्मयोगात्" "योगं योगेश्वरात् कृष्णात्" इत्यैश्वरेण योगबलेनैव भगवतः श्रीकृष्णस्योपदेशकताऽत्र प्रतिपाद्यते, इत्याचार्यस्थानीयः श्रीकृष्णो न प्राप्यब्रह्म-स्वरूपतामर्हति, किन्तु स्थितप्रज्ञादिसिद्धरूपतामेव । तत्त्वज्ञाननिरूपणप्रसङ्गेनापि तु—

"समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ (१३-२७)
समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् ।
न हिनस्त्यात्मनाऽऽत्मानं ततो याति परां गतिम् ॥" (१३-२८)
"उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥" (१५-१७)

इति सदाशिव एव मुख्ये परमेश्वरेश्वरादिपदेनैव निर्देशोऽप्यत एव उपपद्यते । अत्र—श्रीकृष्णस्य पुरुषोत्तमत्वं सिद्धावस्थया, ईश्वरस्य तु स्वतः, इति सिद्धकोटिमेव श्रीकृष्णोऽर्हतीति विशदमेव । अन्यथा—"यस्मात्क्षरमतीतोऽहमि"त्यादि वितथमेवापद्येत श्रीकृष्णस्यैव परमात्मत्वे ॥

॥ गीतायां मांपदेन सदाशिवस्यैव ज्ञेयतया ग्रहणम् ॥

सति चैवम्—तत्र तत्र गीतायां 'मां'पदेन श्रीकृष्णस्यैव प्राप्यतया ज्ञेयतया वा निर्देशोऽपि प्रतर्दनाधिकरणन्यायान्तर्गतेन "शास्त्रदृष्ट्या तूपदेशो वामदेववदि"ति न्यायेन न विरुध्यते ॥

॥ गीतायां प्रतर्दनाधिकरणन्याययोजनम् ॥

तत्र हि प्रतर्दनं प्रतीन्द्रो मामुपास्स्वेति मांपदेनोपास्यं ज्ञेयं वा यन्निर्दिशति, तदिदं नेन्द्रस्यैव ज्ञेयत्वाद्यभिप्रायेण, किन्तु योगमहिम्ना शास्त्राचार्योपदेशपरिपाकनिष्पन्नज्ञानदशायामनुसन्धीयमानब्रह्मस्वरूपा-भिप्रायेणेति विशदीक्रियते, इति प्रकृतेऽपि श्रीकृष्णस्य परमेश्वरप्रणिधानावस्थायामवस्थायोपदेशमभिप्रेत्य मांपदप्रयोगेऽपि न तेनैव रूपेणेन्द्ररूपेणेवात्रोपास्यत्वमिति निर्धार्यते । इयमेव हि नीतिः—गीतान्तराणां पुराणानां सर्वेषां च ज्ञेयस्वरूपविषये विप्रतिषेधशङ्कापरिहारार्थमनुसरणीया, इति ज्ञेयपरब्रह्मता न श्रीकृष्णस्योप-देशकरूपेण, किन्तु तस्यापि ध्येयसदाशिवरूपेणैव । अत एव—"वृष्णीनां वासुदेवोऽस्मी"ति तस्य विभूतिकोटौ निर्देशः । अत्र श्रीवल्लभसंप्रदायानुसारिणो यादवानां सर्वेषां विभूतित्ववर्णन एव तात्पर्यम्, नतु श्रीकृष्णस्य विभूतित्व इति विवरणं तु षष्ठ्यन्तपदनिर्दिष्टानां सर्वेषामन्येषां विभूत्यध्याये मध्यमाधमविभूतित्वस्य तैरप्यङ्गीकाराज्ञोपपद्यते ॥

॥ गीतायां वासुदेवपदस्य सदाशिवपरता ॥

वासुदेवपदं हि गीतायां स्थानत्रये पठ्यते—

"बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥" (७-१९)
"वृष्णीनां वासुदेवोऽस्मि" (१०-३७)
"इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ॥" (१८-७४)

इति । तत्र द्वितीय तृतीययोर्विभूतिरूपस्यैव निर्देशः, प्रथमे तु ज्ञेयस्येति संप्रतिपन्नमिदम् । तत्र प्रथमेन वासुदेवपदेन

"वासनाद्वासुदेवस्य वासितं ते जगत्त्रयम् ।
सर्वभूतनिवासोऽसि वासुदेव नमोऽस्तु ते ॥"

इति विष्णुसहस्रनामोक्तविधया सर्वभूतान्तर्याम्येव विवक्ष्यते । स च शैवमते सदाशिव एव, यस्य गीतायामपि तत्र तत्रेश्वर-महेश्वरादिपदेन श्रीकृष्णाभिन्नतया निर्देशः, इति सुष्ठूक्तं प्रतर्दनाधिकरणनयेनैव मांपदार्थो गीतायां विवक्ष्यते, न त्वापातप्रतिपन्नमात्रम् । अत एव—"कालोऽस्मि लोकक्षयकृत् प्रवृद्धः" इति दिव्यचक्षुर्ग्राह्यं पारमैश्वरमेव रूपं प्रतिपाद्यते ॥

॥ श्रीकृष्णाद्यवताराणां दुष्टनिग्रहार्थानां सदाशिवावतारत्वम् ॥

श्रीकृष्णो हि—भगवतः शङ्करस्य ज्ञानशक्त्यवतार एव । अन्यथा हि न तस्योपदेशकत्वं संभवति । "ईश्वरात् ज्ञानमन्विच्छेदि"त्यादिना ज्ञानशक्तेरैश्वरत्वस्य पाराशर्यविजयादौ श्रीरामानुजदासादिभिरपि स्वीकारात् । न हि भगवतो नारायणस्य सात्त्विकप्रकृतेर्विना रुद्रांशरूपेणावतरणम्, तत्कार्यदुष्टनिग्रहणादिकमपि संभवतीति श्रीकृष्णरूपेणापि सदाशिव एवावतीर्ण इति श्रीरामकण्ठविवरणमपि सर्वतोभद्राख्यगीताव्याख्यागतं सर्वथैवं सत्येव स्वरसं भवति ॥

ब्रह्मप्राप्तिर्हि पाञ्चरात्रादिमत इवात्राप्यार्चिरादिमार्गमपेक्ष्यैव, न त्विहैव विनोत्क्रमणमिति हि—

"तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥" (८-२३)

इति ब्रह्मविदोऽपि ब्रह्मप्राप्तिरार्चिराद्यपेक्षयैवेति प्रतिपादनादवगम्यते ॥

॥ गीतायाः जगत्सत्यत्वादिपरपाशुपतमतपर्यवसानम् ॥

**एतेन—जगदसत्यतावादोऽपि—परास्तः** ; "असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरमि"ति **हि अनीश्वर-जगदसत्यतावादोऽयमासुराणामेवेति हि प्रतिपाद्यते, इति शैवविशिष्टाद्वैतवादे, शुद्धे पाशुपतमते वा गीतातात्पर्यमेव**

युक्ततमं प्रतीयते। यथा चात्रापि—कर्म-ज्ञानयोगयोर्भक्तियोगशेषतया गीतायामवतारो न विरुध्यते, तथा पाञ्चरात्रपरीक्षायामेव विशदम्। सांप्रतं तु शिवोत्कर्षवादेन गीतायाः शैवमते पर्यवसानमेव व्यवस्थाप्यते। महाभारतं हि पाञ्चरात्रमिव पाशुपतमपि दर्शनमात्मज्ञानोपयोगि, परमात्मज्ञानोपयोगि वा मन्यते, इति न सर्वथा हेयत्वं पाशुपतमतस्य संभवति महाभारतदृष्ट्याऽपि, इति यदि पाञ्चरात्रपरतायां गीतातात्पर्यम्, तदीयप्रक्रियाणां सर्वासां गीतायां विद्यमानत्वात्, तर्हि पाशुपतादिशैवदर्शने परं कथं तद् बाधमर्हति? इत्यादित आन्तं पर्यालोच्यमाना भगवद्गीताांऽशतः पाञ्चरात्रसिद्धान्तान् शैवमतसाधारणानपि संगृह्णानाऽपि ज्ञेयस्वरूपनिरूपण-प्रसङ्गे बहुशस्तस्येश्वर-महेश्वरादिपदेन निर्देशात्, प्रतर्दनाधिकरणन्यायेन 'मां'पदस्यापि शास्त्राचार्योपदेशपरिपाकलब्धज्ञानविषयाभिप्रायतयैवोपपत्तेर्युक्तत्वाच्च शैवदर्शनपरैवेति प्रतीयते॥

---

# ॥ भगवद्गीता मीमांसादर्शनं च ॥

## ॥ पञ्चमं व्याख्यानम् ॥

॥ मीमांसादर्शनस्यैव वैदिकदर्शनत्वम् ॥

"साङ्ख्य योगः पाञ्चरात्रं वेदाः पाशुपतं तथा।" इति वाक्यनिर्दिष्टानां साङ्ख्य-योग-पाञ्चरात्र-पाशुपतानां भगवद्गीतायां स्थानं समालोचितम्। अथ—"वेदाः" इति पदनिर्दिष्टं वैदिकं दर्शनमवसरप्राप्तं समालोचयितुम्। वेदपदेन चात्र स्वाध्यायस्य ग्रहणात् "स्वाध्यायोऽध्येतव्य" इति विधिमूलकमेव दर्शनं मीमांसादर्शनाख्यं विवक्ष्यते, नतु "श्रोतव्यो मन्तव्य" इति विधिमूलकं वेदान्तदर्शनम्; तस्योपनिषन्मात्र-श्रवणविधिमूलत्वात्। मीमांसादर्शनप्रतिपाद्यं तु धर्मतत्त्वमेव चोदनालक्षणं श्रेयःसाधनम्, यदधिकृत्य कर्मयोगः प्रवर्तते गीतायाम्, इति कर्मयोगप्राधान्यवादस्यैवात्राभिमतत्वे मीमांसादर्शनस्यैव मुख्यं स्थानं भगवद्गीतायां भवति, अन्यथा तु न। अत्र हि मत उपासनकाण्डस्य कर्माङ्गदेवतास्तावकतयोपयोगः, ज्ञानकाण्डस्य कर्माङ्गकर्तृस्तावकतयोपयोगः, इति कर्मयोगोपकारकत्वात् कर्मयोगस्यैव शेषतामर्हतो भक्तियोग-ज्ञानयोगौ, नतु साङ्ख्य-योगदर्शनयोरिव ज्ञानयोगाङ्गतया कर्म-भक्तियोगौ, न वा पाञ्चरात्र-पाशुपतयोरिव भक्तियोगस्यैवोपकारकौ कर्म-ज्ञानयोगौ, नापि वाऽद्वैतमत इव ज्ञानयोगस्यैव शेषभूतौ कर्म-भक्तियोगौ॥

॥ भास्करादिदर्शनेभ्यो मीमांसादर्शनस्य विशेषः ॥

अत्र कर्मयोगशेषत्वमुपासनाख्यभक्तियोगस्य, इत्युपासनमपि कर्मसमुच्चितं मोक्षसाधनमिति कुमारिल-पादाहृतं व्यवस्थान्तरमभिप्रेत्य, यस्यैवावलम्बेन ब्रह्ममीमांसासमन्वयाधिकरणपूर्वपक्षतयोपासनाप्रकरणपठितानां तूपास्यसमर्पकतयोपयोगपक्षः पक्षीक्रियते। यद्यप्युपवर्षादिवृत्तिकाराणाम्, भास्कराचार्याणाम्, प्रत्यभिज्ञ न-

सिद्धान्तपक्षपातिनां श्रीरामकण्ठादीनां चोपासन-कर्मसमुच्चयवादो वेदान्तदर्शनकाराणामपि संमतः ; तथापि तेषां मत उपास्यमपि ब्रह्म पुरुषार्थत्वाद् भगवद्रामानुजमत इव सत्यं मन्यते, परंतु न मीमांसादर्शने सत्यमुपास्यमूरीक्रियते साङ्ख्यमत एवेति विशेषस्तु न विस्मर्तव्यः ; अत एव—निरीश्वरवादो मीमांसकानां साङ्ख्यानां च। सति चैवं कर्मयोगस्यैवावान्तरो विशेषो भक्तियोगो मीमांसामत इति फलति। इयांस्तु विशेषः—यत् कर्मयोगविषयस्य सत्यत्वम्, उपासनाविषयस्य तु न सत्यत्वमिति ॥

॥ मीमांसादर्शनेऽपीश्वरसत्यता, साङ्ख्यादिभ्यश्चेति विशेषपक्षान्तरम् ॥

वेदान्तदेशिकाः प्रभाकर कुमारिलमतैकदेशिनश्च केचनोपास्यत्वेऽपि सत्यत्वमपीश्वरस्य प्रमाणान्तरेणाबाधात् सत्यं स्वीकुर्वन्ति। अत एव श्लोकवार्तिकम्—"दृढत्वमेतद्विषयः प्रबोधः प्रयाति वेदान्तनिषेवणेने"ति। बृहती च—"यस्तु ब्रह्मविदामेष निश्चयः, यदुपलभ्यते, न तत् तथ्यम्, यन्नोपलभ्यते, तत्तथ्यमिति, नमस्तेभ्यः। विदुषां नोत्तरं वाच्यमि"ति। एतेन—आनुमानिकेश्वरनिरास एवात्र विवक्ष्यते, न त्वीश्वरनिरास इति प्रभाकरविजयोऽपि—व्याख्यातः। अत्र चार्थे शास्त्रदीपिकादिकमप्यनुकूलमेव। मीमांसान्यायप्रकाशस्तु—"ईश्वरो गतकल्पीय वेदं स्मृत्वोपदिशती"ति वदन् स्पष्टमेवेश्वरसत्यत्वं स्वीकरोति। अन्यथा तस्य वेदोपदेष्टृत्वादिविरोधात्। सर्वथा तु—कर्म-भक्तियोगातिरिक्ते ज्ञानयोगे न प्रमाणमिति तु मीमांसकाभिमतं तत्त्वम्। अत्र च मते साङ्ख्यदर्शनाद् मीमांसादर्शनस्यायं विशेषः—यत् साङ्ख्यदर्शने कर्म-ज्ञानयोगावेव, नतु कर्म भक्तियोगौ, मीमांसादर्शने तु कर्म-भक्तियोगावेव, न कर्म-ज्ञानयोगौ—इति, इति स्वतन्त्रज्ञानयोगानङ्गीकारेण मीमांसादर्शनस्य भगवद्गीताया स्थानम्, यत्र प्रत्यगात्मपराणां वेदान्तानां केवलमर्थवादत्वम्, स्वतन्त्रभक्तियोगानङ्गीकारेण तु साङ्ख्यदर्शनस्य भगवद्गीतायां स्थानम्, यत्रोपासनाकाण्डस्य केवलं स्तावकत्वमिति निष्कर्षः फलति ॥

॥ मीमांसादर्शनाभिमतजीवस्वरूपे गीताया एकवाक्यता ॥

अत्र मीमांसादर्शने जीवात्मा नित्यः, सर्वगतः ज्ञानशक्तिस्वभावश्च मन्यते ; "ज्ञानशक्तिस्वभावोऽतो नित्यः सर्वगतः पुमानि"ति हि श्लोकवार्तिकम्। भगवद्गीतायामपि—

"नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥" (२-२४)
"ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥" (१३-१७)

इति नित्यत्व-सर्वगतत्व ज्ञानत्वादि स्वीक्रियते, इति तस्मिन् अंशे न वैषम्यं लेशतोऽपि। तृतीयषट्कस्यैतन्मतेऽर्थवादविधयैव प्रामाण्येऽपि "लिङ्गदर्शनाच्चे"ति पूर्वमीमांसाप्रथमाध्यायप्रथमपादान्तिमसूत्रे "वाचा विरूपनित्यये"त्यर्थवादप्रामाण्येनापि वेदनित्यत्वस्थापनात् प्रमाणान्तराविरोधे स्वार्थेऽपि तस्य प्रामाण्यस्वीकाराद् नात्मज्ञानरूपत्वादावप्रमाणता।

"कार्य-कारणकर्तृत्वे प्रकृतिर्हेतुरुच्यते ।
पुरुषः सुख-दुःखानां भोक्तृत्वे हेतुरुच्यते ॥" (१३-२०)

इत्यादिश्लोकास्तु पुरुषकर्तृत्वस्यापि प्रमाणान्तरगम्यत्वाद् न स्वार्थे प्रमाणम्; गुणवादमात्रत्वात्तेषाम्, इति तु न तैर्विरोधः ॥

॥ सुख-दुःखादेरात्मधर्मत्वं मीमांसामते ॥

यदा तु—कार्याणां विकाराणाम्, करणानां तदाश्रितसुखादीनां च कर्तृत्वे, उत्पादकत्वे वा प्रकृतिर्हेतुः, सर्वेषां प्रकृतिपरिणामित्वादिति तादृशप्रकृतिपरिणामसुखादिभोक्तृत्वं जीवस्येत्यद्वैतप्रक्रियानुसारेण विव्रियते, यद्वा—शरीरेन्द्रियाणामर्थक्रियाकारित्वम्, पुरुषाधिष्ठितक्षेत्राकारपरिणतप्रकृत्याश्रया भोगसाधनक्रिया, पुरुषस्य तु कर्तृत्वमधिकमिति, तदा तु मीमांसकमतेऽपि जीवात्मनां शरीरावच्छेदेनैव भोक्तृत्वस्वीकाराद् न दोषलेशोऽपि । तत्र प्रथमे मते प्रकृतिपरिणामत्वं सुखादेः, मीमांसकमते त्वात्मपरिणामत्वमिति विशेषांशे तु तस्याप्रामाण्यम्, साङ्ख्यानुसारिविवरणे तु जीवकर्तृत्वस्य मीमांसकैः स्वीकारात् चिद्रूपत्वमात्रत्वेऽपि जीवात्मनोऽकर्तृत्वांशविवक्षामादायैव गुणवादत्वं वक्तव्यम् । परं तु न साङ्ख्यमतानुसारेण योजनं गीतायाः, योगमतानुसारेण वा भवति; पातञ्जलाभिमतकर्म-भक्ति-ज्ञानयोगानां केषामप्यस्वीकारेण गीतायाः केवलवृत्तिनिरोधमात्रतात्पर्ययोगेन च तदसंभवात् । अत एव—हि—"द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघवे"ति योगमार्गस्य कर्मयोगादिना न सम्बन्धलेशोऽपीति योगवासिष्ठोक्तिः । पूर्वं तु योगे पर्यवसानमसंप्रज्ञातसमाधेरप्यात्ममात्रसाक्षात्काररूपत्वपक्षं गृहीत्वैवोक्तम्, तत्तु न पातञ्जलाभिमतम्, किन्तु वेदान्तसारमधुसूदनाद्यभिमतमेव, इति "पुरुषः सुखदुःखानामि"त्यस्य श्लोकांशस्यापि न विरोधः । आत्मबहुत्वं तु गीताया बहुश उक्तमिति सर्वेषु दर्शनेष्वद्वैतातिरिक्तेषु मन्यत एव ॥

॥ गीतायां मीमांसाभिमता मुक्तिः ॥

मुक्तिस्तु मीमांसकाभिमता नैयायिकादिमत इव दुःखध्वंस एव । स च गुणातीतत्वमात्रम्, न त्वानन्दानुभवोऽपि । अत एव क्षराक्षरातीतत्वमेव पुरुषोत्तमत्वं पञ्चदशाध्याये प्रतिपाद्यते, नतु निरतिशयानन्दानुभवितृत्वम् । अत एव तत्र तत्र—शान्तिप्राप्तिरेव ज्ञानिनां प्रतिपाद्यते । क्वचन क्वचन ब्रह्मभाववर्णनं तु जीवस्यान्तःकरणादिपरिच्छेदनिवृत्त्यभिप्रायम्, स्वस्वरूपव्यापकत्वादिविषयं वेति न विरोधः, इति मुक्तिस्वरूपमपि मीमांसकाभिमतमेव गीतायां वर्तते । अत एव चतुर्दशाध्याये—

"गुणानेतानतीत्य त्रीन्देही देहसमुद्भवान् ।
जन्म-मृत्यु-जरा-दुःखैर्विमुक्तोऽमृतमश्नुते ॥"(१४-२०)

इति गुणात्ययादिमात्र एवामृतत्वोपचार उपपद्यते ॥

॥ मीमांसागतार्थवादन्यायबलाद् उपनिषदामर्थवादत्वम् ॥

अर्थवादानां स्तावकतयैवोपयोगो न फलसमर्पकतयाऽपीत्यर्थवादाधिकरणन्यायार्थं मीमांसकाभिमतमादायैव—

"यामिमां पुष्पितां वाचं प्रवदन्ति मनीषिणः ।
वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥ (२-४२)
कामात्मानः स्वर्गपरा जन्म-कर्मफलप्रदाम् ।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ (२-४३)
भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥" (२-४४)

इति गीतावाक्यं प्रवृत्तम्, यां नीतिमवलम्ब्योपनिषदामर्थवादत्वेनाप्रामाण्यं मीमांसका मन्यन्ते, ज्ञानयोगं चाद्वैताभिमतं शशशृङ्गायमाणम् । अत एव—सिद्धब्रह्ममात्रज्ञापकत्वेन केवलेन वेदान्ताना प्रामाण्यमित्यद्वैतमतनिरासेन प्रतिपत्तिविधिविषयतयैव सर्वेषां वेदान्तानां प्रामाण्यमिति सिद्धान्तमादायैव ज्ञान-कर्मसमुच्चयवादो मीमांसकानाम्, यदेव गृहीत्वा द्वैत-विशिष्टाद्वैतादिपक्षपातिनः सर्वेऽपि मीमांसका इवाद्वैतिनां ज्ञानयोगमाकाशकुसुमं मन्यन्ते, इति श्रुति-स्मृत्याद्यनुसारेणैव प्रामाण्यं वेदवाक्यानाम्, नतु युक्तीनामपि तत्रोपयोगः । इदमेवाभिप्रेत्य भगवद्गीता—"श्रुति-स्मृती ममैवाज्ञे" इति वदति, इति विधिवाक्यानामेवाज्ञारूपाणा प्रामाण्यमिति सिद्धान्तस्यैव भगवद्गीतारूढत्वाद् भगवद्गीताया मीमांसादर्शन-परतायामेव स्वारस्यमिति प्रतीयते, इति कर्मयोगप्राधान्यमेव गीतार्थः ॥

॥ गीतायां कर्मयोगप्राधान्ये युक्तयः ॥

तथाहि—युद्धक्षेत्रे प्रवृत्तं भीष्मादिबन्धुवर्गदर्शनेन, तद्वधजनितदुःखाशंसया वा ततो विरतं चार्जुनं प्रति युद्धे प्रवर्तनार्थं हि भगवद्गीता भगवता गीता, इति प्रकरणमेकमेव पर्याप्तं कर्मयोग एकत्रैव पर्यवसानं गीताया इति । सति चैवम्—"जर्तिलयवाग्वा वा जुहुयाद् गवीधुकयवाग्वा वा न ग्राम्यान् पशून् हिनस्ति नारण्यानथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च पयसाऽग्निहोत्रं जुहोती"त्यादौ जर्तिलादिविधिनिन्दापुरस्सरं पयोहोमविधेरिव कर्मनिन्दादिपुरस्सरज्ञानयोगादिनिन्दया कर्मयोगविधेरेवात्र प्राधान्यमिति स्वीकर्तव्यम्, इति—कर्मयोगविषये प्रश्ने ज्ञानयोग भक्तियोगयोरवतारणं गीताया अप्राप्तकालम्, आम्रान् पृष्टः कोविदारानाचष्ट इति न्यायो वा तत्रेति—शङ्का नावसरति, साङ्ख्य-योग पाशुपत-पाञ्चरात्रादिदर्शनेष्वेव, तदन्यतमे वा गीतातात्पर्ये तु कर्मयोगमुपक्रम्य भक्ति ज्ञानयोगयोस्तदन्यतरस्य वा कुतोऽवतार इति शङ्का दुःसमाधेयैव ॥

॥ गीतारहस्याभिमतकर्मयोगप्राधान्यतो मीमांसादर्शनस्य विशेषः ॥

लोकमान्यतिलकास्तु—तदीयगीतारहस्यभूमिकायाम्—उक्तामाशङ्कां समाधातुकामाः कर्मयोग एव गीतार्थः, भक्तियोग-ज्ञानयोगौ तु तदङ्गतामेवार्हत इति—वदन्ति। परंतु—अङ्गतया तदवतारणमपि कुतः ? किं वा तस्य प्रयोजनम् ? इति शङ्का तन्मतेऽसमाधेयैव। यद्यङ्गतयाऽवतारो न दोषाय, तर्हि ज्ञानयोगादिप्राधान्येऽपि तदङ्गतया कर्मयोगावतारस्य विवक्षणात् किमिति वोक्ताशङ्कापरिहारार्थं कर्मयोगप्राधान्यमेवावलम्बनीयम् ? इति 'भक्षितेऽपि लशुने न रोगशान्तिरि'ति न्यायाद् दुःसमाधेयैवेयं शङ्का, इति मीमांसादर्शन एव गीतायास्तात्पर्यमिति स्वीकारेणैवेयं समाधेया, नान्येन स्वतन्त्रेण केनापि कल्पितेन प्रकारेण। सति चैवं "साङ्ख्य योगः पाञ्चरात्रं वेदाः पाशुपतं तथा।" इति वचने वेदपदनिर्दिष्टे वैदिकदर्शन एव गीतायास्तात्पर्यमिति फलति। यथाच तद् मीमांसादर्शनमेव, तथा पूर्वमेव निरूपितम् ; स्वाध्यायाध्ययनविधिमूलकदर्शनस्यैव तेनैव विवक्षणात्, इति मीमांसादर्शनदृष्ट्या कर्मयोगातिरिक्तभक्तियोगादिनिन्दायामेव गीतातात्पर्यं पूर्वोक्तविधया जर्तिलयवागून्यायेन, इति नायं प्रश्नः संभवदुक्तिकोऽपि। साङ्ख्यादिदर्शनेभ्यो मीमांसादर्शनस्यायमेव विशेषः—यद्विधि-निषेधात्मकवेदवाक्यप्रामाण्यमेव, तन्मूलस्मृतिप्रामाण्यमेव वाऽत्र ; "श्रुति-स्मृती ममैवाज्ञे" इति वचनात्, इति साक्षाद्वेदमूलकमेव मीमांसादर्शनम्। गीताया अपि पञ्चमवेदमहाभारतान्तर्गतत्वाद् वेदत्वमेवेति गीतादर्शनमपि मीमांसादर्शनमेव ॥

॥ कर्मयोगप्राधान्ये उपक्रम-परामर्शोपसंहाराः ॥

अत एवाष्टादशाध्याये—सात्त्विकादिरूपेण त्यागविभागावसरे—

"नियतस्य तु संन्यासः कर्मणो नोपपद्यते।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः॥" (१८-७)

इति स्वरूपतः कर्मत्यागस्य तामसत्वम्,

"कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन।
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः॥" (१८-९)

इति फलत्यागमात्रपूर्वकस्य कर्मानुष्ठानस्यैव कर्मयोगापरपर्यायस्य सात्त्विकत्वम्,

"न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते॥" (१८-११)

इति कर्मसंन्यासायोगः,

"यज्ञो दानं तपः कर्म न त्याज्यं कार्यमेव तत्।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्॥ (१८-५)

एतान्यपि च कर्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥" (१८-६)

इति कर्मयोगप्राधान्य एव भगवतस्तात्पर्यं च निरूप्यते ॥

यत्तु द्वादशाध्याये—

"अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥" (१२-११)

इत्यत्यन्ताशक्तविषयत्वं वर्णितम्, तदिदं जर्तिलादिवाक्येन पयोनिन्दावद् अर्थवादमात्रम् ॥

वस्तुतस्तु द्वादशाध्यायोपक्रमे—

"एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥" (१२-१)

इति प्रश्नोत्तरप्रसङ्गे—

"मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥ (१२-२)
ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥" (१२-३)
"क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥" (१२-५)

इति श्लोकेन क्लेशसाध्यस्यानुत्तमत्वम्, अक्लेशसाध्यस्य प्राधान्यं चोपक्रान्तम्, इति तदनुसारेणात्यन्ताशक्ताधिकारिकतयाऽक्लेशसाध्यतया वा निर्दिष्टस्य कर्मयोगस्यैव द्वादशाध्यायोपक्रमानुसारेणापि प्राधान्यमवगम्यते, इति मध्येऽपि कर्मयोगप्राधान्यम् ॥

प्रथमषट्कं तु कर्मयोगमेवाधिकृत्य प्रवृत्तं तत्प्राधान्यपरमित्यत्र तु न विप्रतिपत्तिलेशोऽपीत्युपक्रमपरामर्शोपसंहारास्त्रयोऽपि गीतायाः कर्मयोगप्राधान्यपक्ष एव स्वरसा वर्तन्ते । सति चैवम्—"यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे" इति कर्मयोगकर्तव्यत्वविषयत्वं भगवतो निश्चितं मतं दृष्टम् । अतः कर्मयोग एव—

"एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥" (१८-६)

इत्यष्टादशाध्यायेऽप्युत्तममतत्वेनोपसंह्रियत इत्येकवाक्यता भवति, इति कर्मयोगप्राधान्यपक्षो मीमांसाभिमत एव भगवद्गीताविषयः, नतु गीतारहस्याभिमतः ॥

॥ गीतारहस्याभिमतकर्मयोगान्मीमांसादर्शनीयस्य तस्य विशेषः ॥

तत्र हि कर्तव्यमात्रस्य दृष्टार्थस्यादृष्टार्थस्य वाऽर्थशास्त्रार्थस्य धर्मशास्त्रार्थस्य वा योग एव कर्मयोगो नाम मन्यते, नतु धर्मशास्त्रार्थयोगमात्रम्। तत्र च कर्मयोगव्यवस्थाप्रसङ्गे "श्रुतिस्मृती ममैवाज्ञे" इति श्रुति-स्मृत्योरेव प्रामाण्यव्यवस्थापनं विरुध्यत एव। न केवलमिदम्, किन्त्वर्थशास्त्रे धर्मार्थकामास्त्रय एव पुरुषार्थाः, यत्र कामस्य प्राधान्यम्, धर्मस्य तु तत्राप्रामाण्यमिति पूर्वोक्तमेव, गीतायां तु कामस्य धर्माविरोधेनैव प्रामाण्यमिति—

"धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥" (७-११)

इति गीतातोऽवगम्यते। सति चैव गीताभिमतमर्थशास्त्रं गीतारहस्याभिमतं च तद् नितरामेव विभिन्नमिति गीतातात्पर्यं स्वाभिमतेऽर्थशास्त्रेऽपीति लोकमान्याशयो न गीताया रहस्यम्, किन्तु स्वीयमेव तत्। एतेन—कर्मयोगस्य ज्ञानयोगेन सम्बन्धोऽपि तदभिमतः—व्याख्यातः। तदीयज्ञानयोगो हि भगवत्पादानामेव ज्ञानयोगः, नतु भगवद्रामानुजाद्यभिमतः स इति हि गीतारहस्यं वदति। भगवत्पादीयस्तु ज्ञानयोगः कर्मयोगस्य बाधकः, नतु साधकः, उपकारको वा। न हि संविन्मात्रात्मस्वरूपज्ञानिनो ब्राह्मणत्वादि-देहधर्ममप्यभिमन्यन्ते, येन तेषां तदभिमानप्रयुक्तेषु कर्मस्वधिकारो निरुह्येत तदुपकारकतया तदङ्गत्वेन वा ज्ञानयोगस्येति व्यवस्थापयितु शक्येत। व्यक्तं चैतद्धामत्यादौ ॥

यत्तु—"योगः कर्मसु कौशलमि"ति गीतास्वारस्यात्कर्मण्येव योगशब्दसंयोगः संभवति; नतु भक्तौ, ज्ञाने वेति गीतारहस्यम्, तत्रेदमेव समाधानम्—यत् "योगः कर्मसु कौशलमि"तिवत् "समत्वं योग उच्यते" इति साम्यदर्शनेऽपि योगपदस्य सङ्केतात् तदभिप्रायेण भक्तियोगादावपि योगशब्दो नासङ्गतः। सर्वथा तु गीतारहस्याभिमतकर्मयोगप्राधान्यपक्षापेक्षया मीमासादर्शनाभिमतकर्मयोगप्राधान्यपक्ष एव गीताया समुचितः प्रतिभाति ॥

॥ गीताया केवलानासक्तियोगवादनिरासः ॥

एतेन—अनासक्तियोगमात्रे गीतायास्तात्पर्यमिति—परास्तम्, यद्यनासक्तिमात्र सः। अनासक्तियोगो हि गीतायाम्—

"न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥" (१८-११)
"कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन।
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥" (१८-९)
"सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः।" (१८-२)

इत्यादौ नियतकर्मानुष्ठानस्याप्यावश्यकतानिरूपणपूर्वकमेव गीतायामवतार्यते, न त्वनासक्तिमात्रेण। ततश्च काम्यकर्मणां निषिद्धकर्मणां चाननुष्ठानेन नित्यकर्ममात्रानुष्ठाने सति सर्वदुःखध्वंसाख्यो मोक्षो भवतीति मीमांसादर्शनमेव तैत्तिरीयोपनिषद्भाष्योपक्रमणिकादौ भगवत्पादादिभिः संगृहीतं गीतातात्पर्यविषय इत्यवचनसिद्धम्। गीतारहस्याभिमतकर्मयोगप्राधान्यपक्षो लोकमान्यतिलकोपज्ञ एव, ननु कैरप्याचार्यैरन्यैरस्य कुत्रापि व्यवस्थापितः, इति स्वप्रतिभामात्रसारत्वं तस्य तैरेव मन्यते ; कारणं च तत्र नान्यथा युद्धक्षेत्रे युद्ध-कर्तव्यत्वाकर्तव्यत्वप्रश्नोत्तरप्रसङ्गेन ज्ञानयोगादेः सङ्गतिलेशोऽपि। अत्र च वक्तव्यं सर्वं पूर्वमेवोक्तं विस्तरेण॥

॥ प्रत्यध्यायं प्रायेण कर्मयोगचर्चा ॥

"अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः।
अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत॥" (२-१८)
"हतो वा प्राप्स्यसे स्वर्गं जित्वा वा भोक्ष्यसे महीम्।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः॥" (२-३८)
"तस्मादसक्तः सततं कार्यं कर्म समाचर।
असक्तो ह्याचरन् कर्म फलमाप्नोति पूरुषः॥" (३-१९)
"एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः।
कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम्॥" (४-१५)
"तस्मात् सर्वेषु कालेषु मामनुस्मर युध्य च।
मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः॥" (८-७)
"तस्मात्त्वमुत्तिष्ठ यशो लभस्व जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धम्।
मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन्॥" (११-३३)
"तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि॥" (१६-२४)
"एतान्यपि च कर्माणि सङ्गं त्यक्त्वा फलानि च।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम्॥" (१८-६)

इति हि प्रत्यध्यायं प्रायेण कर्मयोगावतारोऽपि मीमांसादर्शन एव गीतातात्पर्यं सूचयति॥

अत्र—आत्मनो नित्यत्वं देहानां चानित्यत्वं युद्धकर्तव्यतायां हेतुतया यद् विवक्षितम्, तदिदं हेतु-मन्निगदाधिकरणन्यायेनार्थवादमात्रम्, इति नाऽऽत्मनोऽबाध्यत्वाप्रमेयत्वादिज्ञानं कर्मयोगाङ्गतया विवक्ष्यते;

तस्य तदनुपकारकत्वात्, प्रत्युत पूर्वोक्तरीत्या तद्विरोधित्वाच्च। अत एव प्रथमं श्लोकमतिरिच्य सर्वेषु पूर्वोद्धृतेषु विहितत्वात् शास्त्रातिक्रममात्रायोगाच्चैव कर्मयोगो व्यवस्थाप्यते भगवता ॥

॥ गीतायामहिंसावादचर्चा ॥

अत्र—"तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ।" इति वदन् हि भगवान्—

"पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः॥" इत्यादिनाऽर्थशास्त्रप्राबल्यमनुसृत्य धर्मशास्त्रस्याप्यन्यथा-नयनं गूढार्थदीपिकाद्युन्नीयमानम्—"अर्थशास्त्राद्धि बलवद्धर्मशास्त्रमिति स्थितिरि"ति याज्ञवल्क्यवचनसिद्धेन धर्मशास्त्रप्राधान्यपक्षेण बाधत इति गम्यते, इति "न हिंस्यात्सर्वा भूतानी"त्यादिवचनसिद्धोऽहिंसावादोऽपि विहितातिरिक्तविषय एव। क्रत्वर्थो हि हिंसा, पुरुषार्थश्च निषेधः, इति भिन्नविषयत्वाद् विधि-निषेधयोर्न बाध्य-बाधकभाव इति तु तत्त्वम्। रागप्राप्तामेव हिंसां निषेधत्यहिंसावाक्यम्, पशवालम्भादिवाक्यं त्वपूर्वामेव हिंसां विदधाति, इति "न हिंस्यादि"ति निषेधाविषयत्वमात्रेण पशवालम्भविधीनामपवादत्वव्यवहारमात्रम्। "प्रकल्प्य चापवादविधिमुत्सर्गोऽभिनिविशते"इत्युत्सर्गशास्त्राविषयविषयकत्वमात्रेणापवादत्वोपचार इति तु यावत्, इति युद्धादीनां क्षत्रियाद्युद्देशेन विहितत्वाद् नाहिंसावाक्यविषयतेति हि मीमांसासिद्धान्तेनैव निर्वहति ॥

इयान् विशेषः—पशवालम्भादिः क्रतुद्वारा स्वर्गाद्यर्थ एवेति क्रत्वर्थः, युद्धं तु साक्षात् पुरुषार्थ-साधनत्वेन पुरुषार्थो धर्मः। पुरुषार्थत्वं च न दृष्टार्थत्वेनैव, किन्त्वदृष्टार्थत्वेनापि, इति नियतं न दृष्टार्थत्वं युद्धस्य। अत एवोक्तम्—"हतो वा प्राप्स्यसे स्वर्गं जित्वा वा भोक्ष्यसे महीम्॥" इति ॥

॥ यागे पशवालम्भादेरपि युद्धसाम्याद् धर्मत्वम् ॥

सति चैवं केवलं दृष्टार्थतया यागीयहिंसातो वैलक्षण्याद् युद्धमुद्दिश्य प्रेरणया भगवद्गीता युद्धातिरिक्त हिंसां दोषायैव मन्यते, इति पिष्टपशुयागादिपक्ष एव समुचित इति साङ्ख्य-पाञ्चरात्रादिप्रक्रियाऽपि नात्रावकाशते। अतो यदि युद्धं हिंसात्मकमपि न पापम्, तर्हि यागीयपशवालम्भादिरपि न पापम्, अथ तत् पापम्, तर्हि युद्धमपि पापमेव स्यादिति—"पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः" इति युद्धेनापि हिंसात्मकेन स्वस्य पापमेव भवेदिति प्रश्नस्य किं वा समाधानं भगवता दत्तं स्यात्? यदि अहिंसावादे सामान्यतो गीतातात्पर्यं स्यात् ॥

अतोऽन्ततो गत्वा विहितत्वादेव हिंसा धर्मः, अन्यथा त्वधर्म इति गीतातात्पर्यमवगम्यते, इति युद्धस्य क्षत्रियधर्मत्वमेव वैधम्, अन्येषां त्वापत्कल्पतयैव तस्य धर्मत्वम्, तच्चान्यथा वृत्त्यभावे एव, गत्यन्तराभावे वा संभवति, यथा द्रोणाचार्यादीनाम्, इति सांप्रतं राज्यप्राप्त्यर्थमपि भारतीयानां सर्वेषां क्षत्रियाणामक्षत्रियाणां च साधारणधनतया स्वाराज्यमिच्छतां यावच्छक्ति अहिंसावादपरिपालनमेव कर्तव्यं भगवद्गीतोपदिशति, गत्यन्तराभावे

तु हिंसाऽपि तु कर्तव्यैव । सांप्रतं त्वहिंसाप्रधान एव व्यवहारो योग्य इति तत्त्वमेव गीतातोऽवगम्यते इति तु केचन क्षमानिधयो मन्यन्ते ॥

सर्वथा तु युद्धवैलक्षण्यं यागीयपश्वालम्भादेः कथमपि न संभवति । व्यक्तं चैतदनुगीतायाम्—अष्टाविंशाध्यायेऽध्वर्यु-यतिसंवादे, यत्र यागे पश्वालम्भादिरपि धर्म इति व्यवस्थापितम् । इद च भगवद्गीताया नियतदृष्टार्थयुद्धमात्रधर्मतायामेव तात्पर्यमिति केषाञ्चन भ्रमप्रसक्तिं वारयितुमेव । ततश्च यथा पिष्टमयदुर्योधनादिभिर्युद्धाभिनयो न युद्धम् , किन्तु लीलामात्रम्, एवं पिष्टमयपशुना यागानुष्ठानमपि केवलं बालक्रीडितमेव स्यात्, नतु मुख्ययागानुष्ठानमिति मीमांसकानां दृष्ट्या यागीयपश्वालम्भादेरपि धर्मत्वमेव गीतातात्पर्यविषयः ॥

॥ गीतारहस्याभिमतपिष्टपशुयागविषये व्यवस्था ॥

लोकमान्यतिलकास्तु गीतारहस्ये कर्मयोगप्राधान्यं शान्तिपर्वगत ३३७तमाध्यायोक्तं पिष्टपशुयागपक्षं च समर्थयन्तः पाञ्चरात्रसिद्धान्तेन वैदिकदर्शनस्य साङ्कर्यं मन्यन्ते, इति तदर्थे पाञ्चरात्रप्रक्रियायां शरणीक्रियमाणायां कर्मयोगप्राधान्यपक्षोऽस्तमियात् , कर्मयोगप्राधान्यपक्षे च समाद्रियमाणे पाञ्चरात्रप्रक्रियासङ्गतिरस्तं गच्छेत् , इति दर्शनद्वयस्य परस्परविरुद्धस्य साङ्कर्यं गीतारहस्यादृतं चिन्त्यमूलमेव ॥

॥ गीतायां मीमांसादर्शनोपसंहारः ॥

सति चैवम्—पश्वालम्भविषये श्रौतसूत्रादीनाम्, "अशुद्धमिति चेन्न शब्दादि"ति ब्रह्मसूत्रस्य चैकवाक्यताऽपि गीतायाः सिद्ध्यतीति मीमांसादर्शनप्राधान्यपक्ष एव स्वरसः प्रतीयते । यतः "साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा" इति पञ्चैव दर्शनानि महाभारताभिमतानि, नान्यत्किमपि वेदान्तदर्शनाख्यम् । यथा च साङ्ख्यादिदर्शने तात्पर्यं संभाव्यमानमपि न विकल्पसहम्, तथा पूर्वमेव निरूपितं तत्र तत्र । तत्र कर्मयोगप्राधान्यपक्ष इव कर्मोपास्तिसमुच्चयपक्षोऽपि ज्ञान-कर्मसमुच्चयाख्यो यो वर्तते, तदनुसारेण गीताया अक्षरशो योजनम्—श्रीरामकण्ठकृतसर्वतोभद्रव्याख्यायामानन्दाश्रमादिप्रकाशितायाम्, अभिनवगुप्तादिव्याख्यायां च विशदमेव । साम्प्रतं तु मीमांसादर्शने गीतातात्पर्यमक्षुण्णमित्येतावदेवात्र निरूप्यते । अधिकमवसरान्तरे निरूपयिष्यते ॥

———

# ॥ भगवद्गीता वेदान्तदर्शनं च ॥

## ॥ षष्ठं व्याख्यानम् ॥

॥ वेदान्तदर्शनस्य स्वतन्त्रस्य गीतायां स्थानम् ॥

"सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः ।
पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत् ॥"

इति हि गीतामाहात्म्यमधिकृत्य महाभारतं वदति । अत्र ह्युपनिषदां गोत्वरूपणेन स्वतन्त्रमुपनिषदां सारो वेदान्तदर्शनमपि स्वीकर्तव्यमिति सूच्यते । तत्र भगवतो दोग्धृत्ववर्णनात् "नारायण पद्मभुवं वसिष्ठं शक्तिं च तत्पुत्रपराशरं च । व्यासं शुकमि"ति परम्परागतत्व वेदान्तदर्शनस्यावगम्यते, इति भगवत्प्रवर्तित-संप्रदायस्य वेदान्तदर्शनस्य जैमिन्यादिप्रवर्तितमीमांसादिदर्शनेभ्यो गरीयस्त्वं प्रतीयते । अत्र दोग्धृत्वनिर्देशेन हि भगवतोऽपि वेदान्तदर्शने न स्वातन्त्र्यं पाञ्चरात्रदर्शन इवेति पौरुषेयत्वकथाया न गन्धमात्रमपि वेदान्त-दर्शने ॥

॥ गीतायां बद्धपुरुषमात्राधिकारः ॥

"पार्थो वत्सः"इति पार्थस्य वत्सत्वनिर्देशेनाधिकारिकपुरुषो नरावतारोऽर्जुनः केवलं निमित्तमात्रम्, लक्ष्यं तु संसारसागरनिमग्नकर्तव्याकर्तव्यविमूढं मनुष्यमात्रम् । अत एवोक्तमेकादशाध्याये—"निमित्तमात्रं भव सव्यसाचिन्"इति ॥

॥ गीतायां न मीमांसादर्शनमात्रम् ॥

अत्र पार्थपदेन—"वर्णागमो वर्णविपर्ययश्चे"ति पञ्चविधनिरुक्तैकदेशवर्णलोपात्मकेन निरुक्तेनापार्थस्य निष्कामस्यैवोपनिषदर्थश्रवणादावधिकारः प्रत्याय्यते, इति कर्मयोगप्रकरणं सर्वमपि ज्ञानयोगाधिकारसंपादक-तयोपयुज्यते, इति "तमेत वेदानुवचनेन ब्राह्मणा विविदिषन्ती"ति श्रुत्यर्थसंग्रह एव कर्मयोगप्रकरणम्, इति तावन्मात्रे गीतातात्पर्यवर्णनेनोपनिषदाम्, तत्सारस्य, गीताया वाऽप्रामाण्यमेवापद्येत, इति मीमांसादर्शनमात्रे गीतातात्पर्यव्यवस्थापनं गोत्वेन रूपितानामुपनिषदामप्रामाण्यापादकत्वाद् गोहत्यासमानमेवेति गोत्वरूपणेन निष्कृष्यते । "साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतम्" इत्यत्र 'वेदाः' इति बहुवचनेन हि सर्वेषां वेदवाक्यानां यथायथं प्रामाण्यस्वीकारेणैव वैदिकदर्शनव्यवस्था प्रतीयते, इति मीमांसादर्शनं वा, भक्तियोगमात्रपर्यवसायि द्वैतादिदर्शनं वा, ज्ञानयोगमात्रपर्यवसाय्यद्वैतदर्शनं वा सर्वमपि वैदिकं दर्शनमेवेति स्थितेऽपि गीतायास्तात्पर्यं न मीमांसादर्शने,किन्तु वेदान्तदर्शन एवेत्युपनिषत्सारत्वान्यथानुपपत्त्याऽवगम्यते।

उपनिषदोऽपि हि कर्मकाण्डगतान्यपि कर्माणि सत्यं गोचरयन्ति, परंतु कर्मकाण्डानां काम्यकर्मपरतयैव प्रमाणता, न कर्मयोगपरतया, उपनिषदस्तु कर्माणि कर्मकाण्डविषयस्वरूपाद्विविच्य ज्ञानाद्युपयोगितया कर्मयोगात्मना व्यवस्थापयन्तीति तत्रैव कर्मप्रसङ्गमात्रं गीतायाम्, नतु कर्मयोगपर्यवसानम् ; मीमांसादर्शनस्य तन्मूलकर्मकाण्डस्य वा सफलकर्मविषयत्वेऽपि कर्मयोगाविषयकत्वात् कर्मयोगपरा गीता कथं मीमांसादर्शनं गोचरयितुमीष्टे ?

॥ वेदान्तदर्शनानां सर्वेषामपि वैदिकत्वम् ॥

"स्वाध्यायोऽध्येतव्य" इति विधिमूलकं वैदिकं दर्शनं मीमांसादर्शनमेव भवितुमर्हतीति तु मीमांसकाः । वेदान्तिनोऽपि तु श्रीभाष्याद्यनुयायिनो भास्करादयो वा पूर्वोत्तरमीमांसयोरैकशास्त्र्यमभ्युपगच्छन्तोऽध्ययनविधिमूलकत्वमेव ब्रह्ममीमांसायाः स्वीकुर्वन्ति, इति तावन्मात्रेण न मीमांसादर्शनस्यैव वैदिकत्वं विकल्पसहम् । यथा चाद्वैतमतेऽपि पूर्वोत्तरमीमांसयोर्भिन्नशास्त्रतायामपि—भामतीमतेऽध्ययनविधिमूलकत्वमेव वेदान्तदर्शनस्य, नतु श्रोतव्यादिवाक्यमूलकत्वम् ; तत्र विधित्वस्यैवास्वीकारात्, तथा भामत्या व्यक्तम्, इति वेदान्तदर्शनस्यापि वैदिकदर्शनत्वं न दुष्यति । विवरणाचार्यमते तु—सत्यं श्रोतव्यादिविधिमूलकमेव वेदान्तदर्शनम्, तथापि तस्य वेदान्तवाक्यस्यापि वेदत्वाविशेषाद् वैदिकदर्शनत्वं न हीयते ॥

आत्मव्यापकत्व-बहुत्वादिप्रक्रिया वेदान्तदर्शनेष्वन्यतमे वर्तन्त एव, वस्तुगत्या त्वात्मैकत्वादावेव तात्पर्यमिति त्वन्यदेतत् । सर्वथा तु वेदान्तदर्शनमपि पृथग् वर्तते, तत्रैव च गीतायास्तात्पर्यम्, ज्ञानयोगस्य तु नाकाशकुसुमत्वमिति तु सिद्धमेव । तदिदं सिद्धम्--यत् सर्वासामुपनिषदाम्, वेदानाम्, वैदिकवाक्यानां वा स्वार्थपरतया न कर्मयोगे, न वा कर्म-भक्तियोगयोः, नापि वा भक्ति-ज्ञानयोगयोः, कर्म-ज्ञानयोगयोर्वा तात्पर्यम्, इति न मीमांसादर्शनम्, न पाशुपत-पाञ्चरात्रदर्शने, नापि योगदर्शनम्, नापि वा साङ्ख्यदर्शनं गीतार्थः, किन्तु कर्म-भक्ति-ज्ञानयोगानां यथायथमङ्गाङ्गिभावेन गीतातात्पर्यविषयताया एव युक्तत्वाद् वेदान्तदर्शनमेव गीतार्थः ॥

॥ सर्वेषु वेदान्तदर्शनेषु कर्मयोगोपयोगः ॥

तत्रोपनिषत्सारेऽपि गीतायां कर्मयोगावतारः, तस्य ज्ञानयोगोपकारकत्वादि च "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इति ब्रह्मसूत्रनिर्णयसूचनार्थमेव, येन तदेकवाक्यताऽपि गीतायाः । ज्ञानयोगश्चायं ज्ञानपदेनोपासनविवक्षायां भक्तियोग एव, शुद्धप्रत्यगात्मज्ञानविवक्षायां जीवात्मज्ञानयोगः, संविन्मात्रानन्दैकरसनिर्विशेषप्रत्यगभिन्नब्रह्मस्वरूपसाक्षात्कारविवक्षायां परमात्मज्ञानयोग इति त्वन्यदेतत् । तत्र द्वैत-विशिष्टाद्वैताद्वैतदर्शनानुसारिणी हि यथायथं व्यवस्था नास्माभिरिदानीं विशिष्य समालोच्यते, सर्वेषामप्येषां वेदान्तदर्शनत्वे तु न विप्रतिपत्तिः । तत्राधिकारिभेदेन व्यवस्थाविशेषमात्रे विवादस्तु वर्तत एव । परंतु साम्प्रतं सोऽकिञ्चित्कर एव मन्यते ॥

॥ पाशुपत-पाञ्चरात्रयोर्वैदिक-तान्त्रिकताविभागादि ॥

इदं त्वत्रावश्यवक्तव्यम्--यत् पाञ्चरात्रादेरपि वेदाविरोधेन प्रामाण्ये वैदिकदर्शनत्वमेव, वेदसमानयोगक्षेमतया स्वतन्त्रं प्रामाण्ये तु तदीयदर्शनस्य न वैदिकत्वम्, किन्तु तान्त्रिकत्वमेव। इयमेव व्यवस्था साङ्ख्य-योग-पाशुपतदर्शनेष्वपि। "साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथे"ति वाक्यनिर्दिष्टानि तु केवलतान्त्रिकाण्येव। अत एव—दर्शनानां विभागावसरे वेदानां ततः पृथक्कृत्य निर्देशः। विभागो हि विभाजकधर्माणां परस्परासमानाधिकरणतायामेव भवति, नतु तत्सामानाधिकरण्येऽपि, इति द्वैतादिदर्शनानां पाञ्चरात्रानुगुणतायामपि न वैदिकत्वं हीयते ; वैदिकत्वस्यापि तत्र स्वीकारात्॥

॥ द्वैताद्वैतादिदर्शनेषु कर्मविचारोपयोगप्रकारः ॥

तत्र विशिष्टाद्वैतमते कर्मविचारपूर्ववृत्तता नियमेन, इत्येकशास्त्रता पूर्वोत्तरमीमांसयोः। एवमेव श्रीभास्करोपवर्षादिसंप्रदायेऽपि, इति सत्यं कर्मयोगस्य वेदान्तदर्शनेऽपि समस्ति सङ्गतिः, परंतु न प्राधान्येन, इति तन्मते यस्मिन् जन्मनि ब्रह्मविचाराधिकारः, तस्मिन्नेव जन्मनि कर्मानुष्ठानम्, तद्विचारश्च नियतः, अद्वैतमते तु विविदिषामात्रोपयोगित्वात्कर्मयोगस्य, जन्मान्तरीयेणापि कर्मानुष्ठानेन तत्संभवाद् न नियमेन ब्रह्मविचारपूर्ववृत्तता कर्मविचारस्य। तथाच भगवत्पादाना भाष्यम्—"धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेरि"ति। व्यक्तं चैतद्भामत्या विस्तरेण विवेचितम्॥

॥ जन्मान्तरीयकर्मणामपि ज्ञानोपयोगित्वादि ॥

"तत्र तं बुद्धिसंयोगं लभते पूर्वदैहिकम्।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन॥ (६-४३)
पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते॥ (६-४४)
प्रयत्नाद्यतमानस्तु योगी संशुद्धकल्मषः।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम्॥" (६-४५)

इति वचनैर्योगविषयकबुद्धिसंयोगः, कल्मषनिवृत्तिश्च जन्मान्तरीयाऽपि कार्यकारिणीति बोध्यते, इति भगवत्पादानां मत एव गीतातात्पर्यमिति केचन। अपरे तु—योगविषयबुद्धिसंयोगमात्रस्यात्रानुवृत्तिरिति कर्मणोऽनुष्ठानमावश्यकमेवेति—मन्यन्ते॥ योगश्चायम्—

"अनाश्रितः कर्मफलं कार्यं कर्म करोति यः।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः॥" (६-१)

इति षष्ठाध्यायोपक्रमानुसारेण कर्मयोगो वा,

"अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥" (६-३७)

इति प्रस्तुतः समाधिरूपो वा ; उभयथाऽपि निःस्पृहतालक्षणकर्मयोगस्य तत्फलस्य वा ससाधनस्य जन्मान्तरेऽनुवृत्तावेव तात्पर्यम् । अत एव—'संशुद्धकल्मषः' इत्यपि विशेषणमित्यद्वैतिनां मतमित्यन्यदेतत् । यतस्तत्र पूर्वदैहिकस्य योगस्येव कर्मयोगस्यापि जन्मान्तरीयस्य पापनिवर्तकत्वमात्रेणोपयोगो वर्तते, इत्येतद्दृष्ट्या समालोचने तु "साङ्ख्यं योगः पाञ्चरात्रमि"ति वाक्ये वेदपदेनाद्वैतदर्शनमेव विवक्ष्यत इति भगवत्पादानुयायिनः ॥

॥ गीताया ब्रह्मसूत्रोल्लेखोपपत्तिः ॥

अत्र च—

"ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥" (१३-५)

"वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृत्" इत्यादिगीतावाक्यानि "सर्वे वेदा यत्पदमामनन्ती"ति वाक्यैकवाक्यतापन्नानि ब्रह्मसूत्र-गीतयोरैकार्थ्यं गमयन्ति । ऋषिभिरिति वसिष्ठादिग्रहणेन योगवासिष्ठैकवाक्यतेत्यद्वैतिनः, पराशरादिभिरिति ग्रहणेन विष्णुपुराणैकवाक्यतयेति विशिष्टाद्वैतिनः, द्वैतभाष्यकाराणां तु नात्र किमपि विवरणम् ॥

॥ गीताब्रह्मसूत्रयोः पौर्वापर्यचर्चा ॥

योगवासिष्ठस्य गीतातः पूर्वत्वं तु नाधुनातना मन्यन्ते । केचन तु ब्रह्मसूत्राणामपि गीतानन्तरत्वमेव । अत एव—अंशाधिकरणे "स्मृतेश्चे"ति सूत्रे—"ममैवांशो जीवलोके" इत्यस्य प्रमाणतयोपष्टम्भः शङ्करभगवत्पादानाम् , "ब्रह्मसूत्रपदैश्चैवे"त्यत्र तु ब्रह्मसूत्रपदेन वेदान्तानामेव च ग्रहणम् । भगवद्रामानुजास्तु—ब्रह्मसूत्रपदेन शारीरकसूत्राणि मन्वाना अपि अंशाधिकरणे स्मृतिपदेन भगवत्पादा इवोक्तामेव गीतां प्रमाणतया गृह्णन्तीति पौर्वापर्यविषय उदासीना इव दृश्यन्ते । गीतारहस्यं तु—विस्तृता गीता काचनासीदपरा, यस्या अनन्तरं ब्रह्मसूत्राणां रचनम्, संक्षिप्ता तु गीता ब्रह्मसूत्रानन्तरेति परस्परत्र परस्परानुसन्धानाविरोध इति—मन्यते । सर्वथा तु ब्रह्मसूत्रैरप्येकवाक्यतयैव गीतायाः प्रामाण्य तस्या वेदान्तदर्शनत्वं विना नोपपद्यते । मीमांसादर्शन एव भगवद्गीतायास्तात्पर्ये तु "ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैरि"त्यनुपपन्नं स्यात् । "सर्वोपनिषदो गाव" इति वाक्यतात्पर्यमप्यत्रैव ॥

॥ गीतायामद्वैतदर्शनस्य सम्बन्धावश्यकता ॥

अत्र गोपदादिस्वारस्यमेकस्यापि वाक्यस्यान्यथानयनेन वेदान्तदर्शनपर्यवसानं वारयति, इत्यद्वैतदर्शनविरोधेन भगवद्गीताया नयनमपि मीमांसादर्शनानुगुणतया तन्नयनमिव गोहत्यासमानमेवेत्यद्वैतिनः, अन्ये

तु—अद्वैतिनां मत एव सर्वेषां सगुणवाक्यानामप्रामाण्यं व्यवस्थाप्यते, इति तत्रैव स दोष इति—मन्यन्ते। अत्र द्वितीये पक्षे निर्गुणवाक्यानां विषयतः स्वरूपभङ्गः, प्रथमपक्षे तु सगुणवाक्यानां यथायथं व्यावहारिक-प्रामाण्यस्वीकाराद् न स इत्यन्यदेतत्। अधिकारिभेदेनावस्थाभेदेन वा प्रामाण्याप्रामाण्यव्यवस्थायां तु न दोषलेशोऽपीति तु परे। "सार्थादपि तस्करा बहव"इति न्यायेनापि निर्विशेषवाक्यमात्राणां स्वल्पानामपि नान्यथा नयनं योग्यमिति तु तदाशयः॥

॥ "अशोच्यान्" "अन्तवन्तः" "वेदाविनाशिनमि"त्यादिश्लोकस्वारस्यमद्वैतमते ॥

"अशोच्यानन्वशोचस्त्वमि"ति श्लोकः पण्डितशब्दप्रयोगाद् बृहदारण्यककहोलप्रश्नोत्तरेण प्रवर्तते, तेन च "अतोऽन्यदार्तमि"त्युपसंहारपर्यन्तार्थो गम्यत इति जीवात्मनोऽशोच्यत्वं नित्यत्वेनेति विवक्ष्यते, इत्यात्मविषयत्व-मद्वैतमते, देह-जीवोभयविषयत्वं विशिष्टाद्वैतमते, "गतासूनि"त्यस्यासन्नमरणविषयत्वं द्वैतमते, यत्तु भाष्योत्कर्षदीपिकायां निरस्यते। तथाच पण्डितशब्दप्रयोगस्य न मतान्तरेषु स्वारस्यमद्वैतमतरीत्यै-वोपनिषदर्थसङ्कलने॥

एतेन—"अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः। अनाशिनोऽप्रमेयस्ये"त्यात्मनोऽप्रमेयत्व-मपि—व्याख्यातम्। अनेन हि केनोपनिषदर्थस्तैत्तिरीयादिगतवाङ्मनसाद्यवेद्यत्वम्, "यत्साक्षादपरोक्षाद्ब्रह्मे"ति-श्रुत्यर्थश्च सङ्गृह्यत इत्यद्वैतमर्यादा। विशिष्टाद्वैतमते तु—अप्रमेयपदेन प्रमातृत्वं भोग्यभेदो वा विवक्ष्यते। तत्र च लक्षणादोषः, अनुभूतेरात्मनो वाऽनुभाव्यत्वसिद्धान्तभङ्गश्च भवति। द्वैतमते तु—अप्रमेयस्वरूपत्वं विवक्ष्यत इति स्पष्टं प्रतीयमानार्थत्यागदोषो वर्तते, श्रुत्यर्थसारसङ्कलनं तु न मात्रया। इदं च भगवत्पादैरुक्त-श्लोकव्याख्यावसरे "यत्साक्षादपरोक्षाद्ब्रह्मे"ति वाक्यनिर्देशेन ज्ञाप्यते। अतोऽत्र श्लोकद्वयेऽपि जीवब्रह्मैक्यं गृहीत्वैव गीताप्रवृत्तिरिति विशदमेव॥

एतेन—"वेदाविनाशिनं नित्यम्" (२-२१) इति श्लोकोऽपि—व्याख्यातः। तेन हि "मनसैवानु-द्रष्टव्यमि"ति श्रुत्या वृत्तिभास्यत्वमेव, न फलव्याप्यत्वमित्यद्वैतसिद्धान्त एव मन्यते, इति नाप्रमेयत्व-द्रष्टव्यत्व-निर्देशयोर्विरोध इत्यद्वैतप्रक्रिया, मतान्तरयोस्तु नैवम्; अनुभाव्यत्वस्यैव तत्र विवक्षणात्॥

॥ कर्मयोगोपयोगप्रकारः ॥

## "न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते॥" (३-४)

इति तु "तमेतमि"ति वाक्यार्थसारसङ्कलनमिति सर्वसंप्रतिपन्नम्। तथापि कर्मोपयोगोऽयं जन्मान्तरीयत्वेऽप्युप-पद्यत इति पूर्वं गीताभिमततया निरूपितमद्वैतमत एवोपपद्यते, न मतान्तरे। अत एव—"प्रव्रजन्त्य-कृतोद्वाहाः परं वैराग्यमाश्रिताः।" इति बृहस्पतिवचनमुपपद्यते। कर्ममार्गेण मोक्षवादस्तु सर्वमतविरुद्ध एव, यतः "तमेतमि"ति वचनविरोधः॥

"काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः।
क्षिप्रं हि मानुषे लोके सिद्धिर्भवति भारत ॥" (४-१२) ॥

इति तु—'अथ योऽन्यां देवतामुपास्ते' इति श्रुत्यर्थसार एव सर्वेषु मतेषु। तदेवमुपनिषत्सारत्वं गीताया न द्वैतादिमतानुसारि सामान्यतो वर्तत इति निरूपितम् ॥

॥ गीताया नार्जुनमात्राधिकारिकत्वम् ॥

एतावदेवात्र संग्रहेण निरुच्यते—यद् अर्जुनं प्रत्युपदिष्टाया गीतायाः कथमस्मान्प्रत्युपयोग इति? अत्र च पार्थस्य वत्सत्वमेव पर्याप्तं समाधानम्। दुग्धत्ववर्णनेन नु पाञ्चरात्रादिवैषम्यं सूच्यते। यतः सिद्धार्थप्रकाशकत्वान्न स्वातन्त्र्यमर्थेषु भगवतोऽप्यत्र पाञ्चरात्रादाविवेत्यलम् ॥

॥ गीताया उपनिषत्संग्रहत्वविवेचनम् ॥

सर्वोपनिषत्सारत्वं गीतायाः कथम्? किं वोपनिषत्प्रतिपाद्यम्? इति साम्प्रतं विचारयामः। तत्र साक्षादुपनिषद्वाक्यान्येव कठवल्लीगतानि किञ्चिदिव परिवर्तनेन गीतायां गीतानीमानि—

"य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ (२-१९)
न जायते म्रियते वा कदाचिद् नायं भूत्वा भविता वा न भूयः।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥" (२-२०)

इति। अर्थतोऽनुवादस्तु—

"आश्चर्यो वक्ता कुशलोऽस्य लब्धाऽऽश्चर्यो ज्ञाता कुशलानुशिष्टः।" इत्यस्य—"आश्चर्यवत्पश्यति कश्चिदेनम्" (२-२९) इत्यत्र। अयं हि श्लोको जीवात्मस्वरूपविषय इति भगवत्पादाः। एवमेव भगवद्रामानुजाचार्या अपि। आनन्दतीर्थास्तु—ईश्वरसरूपत्वेनात्मनो दुर्लभत्वमिति वदन्तोऽपि जीवात्मपरत्वे न—विमन्यन्ते। तेन गीतोपनिषदोरेकार्थत्वेऽङ्गीकर्तव्ये "आश्चर्यो वक्ते"त्यत्र परमात्मप्रश्नपरतया विवरणं न भगवत्पादव्यतिरिक्तानां शोभते। सति चैवं कठवल्लीगम्यनिर्विशेषजीवात्मस्वरूपमेव ब्रह्मेति वाद एवोपनिषत्सार इति गम्यते ॥

"सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥" (६-२९)

इति तु

"यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति।
सर्वभूतेषु चात्मानं न ततो विजुगुप्सते ॥"

इतीशोपनिषद्वाक्यार्थानुवादः। अत्र परस्पराध्यास इत्यद्वैतप्रक्रिया, उपनिषदेकवाक्यता च, यत्रात्मशब्दस्य ब्रह्मपरत्वम्। भगवद्रामानुजमते जीवाना प्रकृतिवियुक्ताना ज्ञानैकाकारतया साम्यम्। अत्र च नोपनिषदेकवाक्यता। द्वैतदर्शने तु—सत्यमुपनिषदेकवाक्यता, तथाऽपि परस्पराश्रयत्वनिरूपणं नोपयुज्यते॥

"मया ततमिदं सर्वं जगदव्यक्तमूर्तिना।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः॥ (९-४)
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्।
भूतभृन्न च भूतस्थो ममात्मा भूतभावनः॥" (९-५)

इति भगवत्पादमत एव सङ्गच्छते, न द्वैतमते। तत्र हि—मत्स्थत्वेऽपि यथा पृथिव्यां स्पृष्ट्वा स्थितानि, न तथा मयि; अन्योन्यधर्मासंक्रान्तत्वादिति—व्याख्यायते, नियामकस्य नियम्यस्य च परस्परधर्मसङ्करो नेति च तात्पर्यमिति—मन्यते। इदं च द्वैतमते वितथम्। अद्वैतमते तु नैवम्; प्रपञ्चमिथ्यात्वनिरूपणे तात्पर्यात्। एवमेव विशिष्टाद्वैतमतेऽपि। तत्र—मत्स्थत्वं नियम्यत्वेन, मम तदधीनस्थितिकत्वाभावो 'नचाहमि'त्यनेन, 'नच मत्स्थानी'त्यनेन तु घटादीना जलादिधारकत्वतुल्यं धारकत्व नास्तीति—मन्यते। इदं सर्वं तत्रापि वितथमेव। अद्वैतमते सर्वैकरूप्यम्॥

"ध्यायतीव लेलायतीवे"ति श्रुत्यर्थस्तु—

'ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति॥" (१५-३)
'सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवार्जितम्।' (१३-१४)
'यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते।' (१८-१७)

इति श्लोकेषु वर्तते, जीवन्मुक्तविषयत्वादित्यद्वैतप्रक्रिया। इद सर्वं परिशुद्धजीवपरम्; 'ज्ञेयमि'ति तस्यैव प्रस्तुतत्वात्, परमात्मन एव वात्र विवक्षणमिति च विशिष्टाद्वैत-द्वैतमते। तत्र ज्ञेयत्व जीवस्य परिशुद्धस्याहमर्थस्य यदि, तर्हि 'यस्य नाहंकृतो भावः' इत्याद्यनुपपन्नम्॥

अष्टमाध्याये—'यदक्षरं वेदविदो वदन्ती'ति श्लोकस्तु—"सर्वे वेदा यत्पदमामनन्ती'ति कठवल्ल्यर्थसङ्ग्रह एव। स च प्रत्यगात्मपर इत्यद्वैतमतमभेदविवक्षया, तेन चाक्षरविद्ययाऽप्येकवाक्यता। विशिष्टाद्वैतमतेऽपि तु तदेव मन्यते, परं तु परमात्ममात्रपरता। एवमेव द्वैतमतेऽपि। परंतु कठवल्ल्यां प्रश्नत्रयविरोध स्तयोर्मतयोः, यतः प्रश्नचतुष्टयमेव तत्रेति हि ते मन्येते॥

यत्तु नवमाध्यायोपक्रमे—ज्ञानं विज्ञानसहितं गुह्यादपि गुह्यतममुपदिष्टम्, तदपि ब्रह्मात्मैक्यसाक्षात्काररूपमेवेत्यद्वैतप्रक्रिया। विशिष्टाद्वैतप्रक्रिया तु—भगवदुपासनात्मकमेव, इति तत्र बहूनां निर्विशेषवाक्यानामप्रामाण्यापत्तिरिति सर्वोपनिषत्सारत्वं गीताया नोपपद्यते॥

"क्षेत्रज्ञं चापि मां विद्धि" इति तु "तत्त्वमसी'तिवाक्यार्थसङ्ग्रहरूपमद्वैतमत एवोपपद्यते, नतु मतान्तरयोः ; शरीर-शरीरिभावे लक्षणापत्तेः। द्वैतमते "मां क्षेत्रज्ञ विद्धि" इति स्वस्यैवेश्वरत्ववर्णनमनपेक्षितम्, तदीश्वरताया बहुशोऽन्यत्र प्रतिपादनात्, तदुपोद्बलकश्रुत्यभावाच्च, इति महावाक्यार्थोऽद्वैतमताभिमत एवोपनिषदर्थ इति गीताहृदयम्। अत एव—'ज्ञेयं यत्तदि'त्यादीनां जीवपरत्वव्याख्यानमप्राप्तकालम्। सर्वथा तूपनिषत्सारत्वं गीताया नानुपपन्नम्। तदेवं सामान्यतो गीताया उपनिषत्सारत्वं व्यवस्थापितम्॥

॥ समन्वयपद्धत्या गीतातात्पर्यनिर्णयस्यावश्यकत्वम् ॥

एतावता गीतायां दर्शनविशेषाणां निर्देशमात्रं वर्तत इति निरूपितम्। न चैतावतोपक्रम-परामर्शोप-संहारादिभिर्विनाऽत्रैव तात्पर्यमिति निर्धारयितुं शक्यते। न हि विशकलिततया दर्शनविशेषप्रक्रियाणां कस्याश्चन दर्शनमात्रेणैकग्रन्थत्वनिर्णयो भवितुमर्हति; बृहस्पति कपिल पतञ्जलि कणाद-गौतमादिनिबन्धानामिव, इत्युपनिष-त्सारत्वेऽपि गीताया उपनिषदामिव व्यवस्थितमेकप्रबन्धत्वं न निर्वोढुं पार्यते, इत्याधुनिकानामिव प्रतिविषयं ग्रन्थभेदेन बहुतरग्रन्थसमुदाय एव गीतेत्यापद्येत। न चेयं शैली भारतीयदर्शनेषु कुत्रापि दृष्टचरी। अत एव उपनिषदामपि समन्वयपद्धत्या तात्पर्यनिर्धारणार्था ब्रह्ममीमांसा, याऽऽधुनिकचरितविमर्शकदृष्ट्या तत्तदवान्तरवाक्येनैव शास्त्रसमाप्तिमत्यन्तमेवानादरणीयां मन्यते। अत एवेक्षत्यधिकरणादिसूत्राणि स्वरसानि। अत एव ब्रह्मसूत्रे—"तत्तु समन्वयात्" (१-१-४) "गतिसामान्यादि"(१-१-१०)ति च, इति समन्वय-पद्धत्यैकवाक्यतापद्धत्या वा गीतातात्पर्यनिर्धारणमत्यन्तमेवावश्यकम्। अतो गीतायाः संपूर्णाया अभिमतं दर्शनं किमिति विचारोऽवसरप्राप्तः, इति षट्कत्रयात्मकगीतायाः प्रथमं षट्कमादाय विमर्शोऽत्र प्रस्तोष्यते॥

॥ श्रीमधुसूदनसरस्वतीसंगृहीतगीतार्थसंग्रहः ॥

तथाहि—मधुसूदनसरस्वती, भगवद्रामानुजाचार्याश्च संपूर्णं गीतातात्पर्यमेवं विशदयन्ति। तत्रेयं माधुसूदनी—

"सच्चिदानन्दरूपं तत्पूर्णं विष्णोः परं पदम्।
यत्प्राप्तये समारब्धा वेदाः काण्डत्रयात्मकाः॥
कर्मोपास्तिस्तथा ज्ञानमिति काण्डत्रयं क्रमात्।
तद्रूपाष्टादशाध्यायैर्गीता काण्डत्रयात्मिका॥
एकमेकेन षट्केन काण्डमत्रोपलक्षयेत्।
कर्मनिष्ठा-ज्ञाननिष्ठे कथिते प्रथमान्त्ययोः॥
यतः समुच्चयो नास्ति तयोरतिविरोधतः।
भगवद्भक्तिनिष्ठा तु मध्यमे परिकीर्तिता॥

उभयानुगता सा हि सर्वविघ्नापनोदिनी ।
कर्ममिश्रा च शुद्धा च ज्ञानमिश्रा च सा त्रिधा ॥
तत्र तु प्रथमे काण्डे कर्म-तत्त्यागवर्त्मना ।
त्वम्पदार्थो विशुद्धात्मा सोपपत्तिर्निरूप्यते ॥
द्वितीये भगवद्भक्तिनिष्ठावर्णनवर्त्मना ।
भगवान् परमानन्दस्तत्पदार्थोऽवधार्यते ॥
तृतीये तु तयोरैक्यं वाक्यार्थो वर्ण्यते स्फुटम् ।
एवमप्यत्र काण्डानां संबन्धोऽस्ति परस्परम् ॥''—इति

॥ भगवद्रामानुजानां गीतार्थसंग्रहः ॥

गीतार्थसङ्ग्रहे भगवद्रामानुजाचार्यास्तु वदन्ति—

''ज्ञानकर्मात्मिके निष्ठे योगलक्ष्ये सुसंस्कृते ।
आत्मानुभूतिसिद्ध्यर्थे पूर्वषट्केन चोदिते ॥
मध्यमे भगवत्तत्त्वयाथात्म्यावाप्तिसिद्धये ।
ज्ञान-कर्माभिनिर्वर्त्यो भक्तियोगः प्रकीर्तितः ॥
प्रधान-पुरुषाव्यक्त-सर्वेश्वरविवेचनम् ।
कर्मधीभक्तिरित्यादिः पूर्वशेषोऽन्तिमोदितः ॥
अस्थानस्नेह-कारुण्य-धर्माधर्मधियाऽऽकुलम् ।
पार्थं प्रपन्नमुद्दिश्य शास्त्रावतरणं कृतम् ॥'' इति ।

॥ श्रीमदानन्दतीर्थीयगीतार्थसंग्रहः ॥

साधनं प्राधान्येनोक्तमतीतैरध्यायैः, उत्तरैस्तु षड्भिर्भगवन्माहात्म्यं प्राधान्येनाहेति सप्तमाध्यायोपक्रमे, त्रयोदशाध्यायोपक्रमे पूर्वोक्तज्ञान-ज्ञेय-क्षेत्र पुरुषान् पिण्डीकृत्य विविच्य वक्त्यनेनाध्यायेनेति, चतुर्दशाध्यायोपक्रमे तु—साधनं प्राधान्येनोत्तरैर्वक्तीत्यानन्दतीर्थाः—वदन्ति । एतन्मतरीत्या सामान्यतो विशेषतश्च भगवत्स्वरूपज्ञानं भक्तिसाधनम्, तेन च मोक्षः । ज्ञानसाधनं तु कर्मेति कर्म-ज्ञान-विज्ञानैर्भक्तिमार्गप्रतिपादन एव गीतातात्पर्यमिति नाध्यायषट्कभेदेन निष्ठात्रयोपदेशः । तथाच भगवन्माहात्म्यज्ञानेऽमानित्वादिकमिव निष्कामकर्मानुष्ठानादिकम्, योगादिकं च साधनमिति भक्त्युपयोगि ससाधनभगवन्माहात्म्यमेव गीतार्थः ॥

॥ गीताप्रथमषट्कस्य साङ्ख्य-योग-मीमांसादर्शनैरसङ्गतिः ॥

तत्र प्रथमषट्कस्य साङ्ख्य-योगयोर्मीमांसायां पाशुपत-पाञ्चरात्रयोर्वा न पर्यवसानमिति सर्वसंमतम्। तत्र—

"प्रकृतेः क्रियमाणानि गुणैः कर्माणि पश्यतः ।
अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते ॥" (३-२७)

इति कर्मयोगापेक्षितमात्मनोऽकर्तृत्वं तस्य पराधीनकर्तृत्वेन स्वातन्त्र्येण कर्तृत्वाभावप्रतिपादनपरम्, न त्वात्मनोऽहमर्थत्वाभावे, कर्तृत्वाभावे वा लिङ्गमिति द्वैताचार्या विद्वदविदुषोः कर्मवैलक्षण्यस्य निरूपण एव तात्पर्यमिति प्रतिपादयन्ति। तेन च साङ्ख्य-योगयोर्नात्र विवक्षेति सिद्धमेव। भगवद्रामानुजमते तु—कर्मयोगमनुतिष्ठतो विदुषोऽविदुषश्च कर्मयोगापेक्षित आत्मनोऽकर्तृत्वानुसन्धानप्रकारोऽत्र वर्ण्यते—सात्विकादिकर्माणि क्रियमाणान्यहंकारविमूढात्माऽहं कर्तेति मन्यते, तत्त्ववित्तु सात्विकादिकार्येषु स्वीयं कर्तृत्वं न मन्यते—इति निरूपणेन। अत्राप्यात्मनः कर्तृत्वमात्रनिषेधो नास्ति। 'अहङ्कारविमूढात्मे'त्यनेन तु देहादावात्मभ्रममात्रं तन्मते विवक्ष्यते। अद्वैतमते तु—अन्तःकरणैक्याध्यासेनैवात्मनोऽहंत्वम्, कर्तृत्वं च, वस्तुतस्तु न कर्तृत्वम्, इति विवक्षया यद्यपि साङ्ख्य-योगप्रक्रियानुवाद इव प्रतीयते; तथाऽपि सामान्यतः कर्तृत्वमिव भोक्तृत्वमप्यहङ्कारसंबन्धराहित्येन निषेध्यतया प्रथमषट्कं प्रतिपादयति। तत्र 'मयि कर्माणि संन्यस्ये'ति भगवदनुसन्धानस्यापि कर्मयोग उपयोगवर्णनान्न साङ्ख्यमते पर्यवसानम्, योगमते तु भगवदनुसन्धानस्य योग एवोपयोगो मन्यते, नतु कर्मणीति न तत्रापि गीतायास्तात्पर्यमद्वैतमत इव। षष्ठाध्याये तु कर्मयोगबहिर्भावेन स्वतन्त्रसाधनत्वं योगवासिष्ठाद्यनुसन्धीयमानं योगमार्गस्य निषिद्धमेव ॥

मीमांसादर्शनन्तु—नात्रावसरमपि लभते। 'वेदवादरताः' इति हि काम्यकर्मपराणां फलवाक्यानामेवार्थवादत्वेनाप्रमाणतां प्रतिपादयति, न तूपनिपदर्थवादत्वादिकम्, तदप्रामाण्यादिकं वा। यदा तु—"विज्ञातृरूपता तु विज्ञानस्यानाशङ्कनीया; अनाशङ्कितत्वात्। युक्तं चानाशङ्कितम्; कर्मप्रवणत्वात्। तदुक्तं भगवता—"न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ॥" (३-२६)। इति बृहतीवाक्यमालोच्यते, "इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या। दृढत्वमेतद्विषयः प्रबोधः प्रयाति वेदान्तनिषेवणेने"-त्यादि कुमारिलवाक्यं वा, तदा तु मीमांसायाः स्वतन्त्रता वेदान्तदर्शनबहिर्भावेन नास्तीति गम्यते ॥

पाशुपत-पाञ्चरात्रचर्चा तु लेशतोऽप्यत्र नास्ति। ईश्वरादिपदानां तु स्वरूपचैतन्यपरत्वमेव। अत एव कृष्णस्येव शङ्करस्यापि विभूतित्वम्—"रुद्राणामस्मि शङ्करः" इति ॥

॥ यागीयहिंसाया अदोषत्वम् ॥

अहिंसावादस्तु युद्धांशमात्रे यदि धर्मत्वेन, शास्त्रविहितत्वमात्रेण वा मन्यते, तर्हि "अशुद्धमिति चेन्न शब्दादि"तिसूत्रोक्तविधया यागादौ केवलं कथं दोषः ? कथं चात्रापि यागादिहिंसापरिहारार्थमिव

पिष्टमयेन यागेनेव तादृशदुर्योधनादिनाशनेन न युद्धसिद्धिः ? स्पष्टं चानुगीतायामष्टाविंशाध्याये 'अध्वर्यु-यति'संवादे यागे हिंसाया अदोषत्वं व्यवस्थापितम् ॥

॥ गीतायां वेदान्तदर्शनस्थानोपसंहारः ॥

द्वैत-विशिष्टाद्वैताद्वैतप्रक्रियाद्यनुगुणं प्रथमषट्कस्य विवरणं वर्तत एवेति सामान्यतो विवेचितम् । परं त्वेकत्रैव तत्र तात्पर्यम्, नान्यत्रेति न द्रागित्येव मतविशेषनिरासोऽत्र कर्तुं शक्यते ; यतः सर्वेऽप्याचार्याः स्वस्वप्रक्रियाऽविरोधेन गीतां व्याचक्षते । अत्र चोपनिषदामिव तात्पर्यनिर्णयार्थं तत्तदसाधारणप्रक्रियाणामुल्लेखो गीतायां कीदृश इति पृथगेव विचारः कर्तव्यः ॥

---

# ॥ भगवद्गीताप्रथमषट्कम् अद्वैतदर्शनं च ॥

## ॥ सप्तमं व्याख्यानम् ॥

॥ मतत्रयाभिमतार्थसंग्रहः ॥

प्रथमाध्याये सप्तचत्वारिंशच्छ्लोकाः, द्वितीयाध्याये दश श्लोकाश्च—भगवद्गीतावतरणपराः श्रीकृष्णेनार्जुनसंबोधनेनोपदेशप्रसक्तिसंपादनाय प्रवृत्ता इति सर्वसंप्रतिपन्नम् । तत्र गीतायाः संपूर्णायाः प्रवृत्तिः—मुख्यतया भगवत्स्वरूपज्ञापनार्थम्, कर्मयोगादि तु तदुपयोगित्वाद् न प्राधान्येन गीताप्रतिपाद्यमिति द्वैताचार्याः । भगवद्रामानुजाचार्यास्तु—पाण्डुतनयप्रोत्साहनव्याजेन परमपुरुषार्थलक्षणमोक्षसाधनतया वेदान्तोदितं भगवद्विषयं ज्ञान-कर्मानुगृहीतभक्तियोगावतारार्थं गीताप्रवृत्तिरिति—मन्यन्ते । शङ्करभगवत्पादास्तु—प्रवृत्ति-निवृत्तिलक्षणधर्मद्वयोपदेशार्थं गीताप्रवृत्तिः । तत्र मतान्तरेष्विव गीताशास्त्रस्य प्रयोजनं संसारात्यन्तोपरमलक्षणं निःश्रेयसमेव । इयान् विशेषः—यदन्यत्राहमर्थो न संसारः, भगवत्पादमते तु सोऽपि संसार इत्यहमर्थस्यापि नाश एव निःश्रेयसमिति । तत्साधनं तु—सर्वकर्मसंन्यासपूर्वकात्मज्ञाननिष्ठारूपो धर्मः, य एव निवृत्तिलक्षणो धर्मो नाम । एतेषु त्रिष्वपि मतेषु ज्ञान-कर्मसमुच्चयवादो नास्त्येव । मोक्षसाधनज्ञानोपकारकत्वमेव कर्मयोगस्येति समानम् । इयान् विशेषः—भगवत्स्वरूपज्ञानमुपासनात्मकमेव दर्शनसमानाकारतामापन्नं मोक्षसाधनम्, तस्यैव भक्तियोग इति नाम, ज्ञानयोगस्तु शुद्धजीवात्मज्ञानयोग एव, येन विना भक्तियोगो दुर्लभ इति मतान्तरे, अद्वैतमतं तु—संविन्मात्रतया जीव-ब्रह्मणोः स्वरूपमात्रज्ञानमेव भगवत्स्वरूपज्ञानम्, यस्यैवोपकारकौ कर्म-भक्तियोगौ । तत्र कर्मयोगस्य ज्ञानयोगोपकारकत्वे "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ती"ति श्रुतिः सर्वत्र

मूलम्, भक्तियोगस्य ज्ञानयोगसाधनत्वे तु "वशीकृते मनस्येषा सगुणब्रह्मशीलनात्। तदेवाविर्भवेत्साक्षादपेतोपाधिकल्पनमि"ति वचनसिद्धं वेदान्तसार-वेदान्तपरिभाषादिसंगृहीतं सगुणोपासनस्यापि श्रवणादिवत्साक्षात्कारसाधनत्वमतमेव मूलम् ॥

॥ गीतावतरणार्थसंग्रहः ॥

तत्र निजतनयविजयदुराशयाविष्टेन धृतराष्ट्रेण मामकाः पाण्डवाश्च धर्मक्षेत्रे कुरुक्षेत्रे युद्धार्थं समवेताः किमकुर्वतेति प्रथमश्लोकार्थः। द्वितीयादित्रयोदशान्तैस्तु—"दृष्ट्वा तु पाण्डवानीकमि"त्यादिभिः—"ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः। सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवदि"त्यन्तैः कौरववृत्तान्तः—द्रोणाचार्यसमीपे गत्वा पाण्डवानां स्वस्य च सेनायामुपस्थितानां विशिष्टानां शूराणां नामनिर्देशः, भीष्माभिरक्षणार्थं सर्वेषां प्रयत्नावश्यकत्वादिरूपोऽवतारितः। ततश्चतुर्दशमारभ्योनविंशपर्यन्तैः श्लोकैः—पाण्डववृत्तान्तः—श्रीकृष्णार्जुनयोः स्यन्दने महति स्थितयोर्भीम-युधिष्ठिर-नकुल-सहदेव-काश्य-शिखण्डि-धृष्टद्युम्न-विराट-सात्यकि-द्रुपद-द्रौपदेय सुभद्राणां च स्वस्वशङ्खाध्मानेन धार्तराष्ट्रहृदयविदारणेन स्वसेनायाः प्रोत्साहनरूपोऽवतारितः। विंशैकविंश-द्वाविंश त्रयोविंशैस्तु श्लोकैः—प्रवृत्ते शस्त्रसंपाते भगवत्सविधे युद्धकामनयाऽवस्थितानां दर्शनार्थमर्जुनस्य सेनाद्वयमध्ये रथस्थापनार्थं प्रार्थनमवतार्यते। चतुर्विंश पञ्चविंशाभ्यां तु—रथस्थापनानन्तरं तत्र समवेतानां कुरूणां दर्शनार्थं भगवतः प्रेरणावतारः। पञ्चविंश-षड्विंशाभ्यां—तत्र कौरवसेनायां भीष्मादिबन्धुवर्गदर्शनेनार्जुनस्य विषण्णस्य पुनर्भगवत्सविधे निवेदनोपक्रमः, ततः सप्तविंशादिभिः—सप्तचत्वारिंशपर्यन्तैरेकविंशतिभिः श्लोकैराध्यायसमाप्ति शोक-मोहाभ्यामर्जुनस्य धैर्यच्युत्यादिना, युद्धे स्वस्याप्रयोजनत्वाविबुद्ध्यादिना, हिंसादिमहापापप्रसक्त्यादिभयेन च युद्धादुपरतिरवतारिता, येन दृष्टमदृष्टं वा न किमपि प्रयोजनं युद्धे वर्तत इत्याद्यप्यवतारितम्। ततो द्वितीयाध्यायप्रथम-द्वितीय-तृतीयैः पुनरपि भगवतोऽर्जुनं कृपाविष्टमपि प्रति युद्धे प्रेरणमवतारितम्, यदनन्तरमपि तुरीयादिभिर्दशमान्तैर्भीष्मादिवधापेक्षया भैक्षाचर्यमेव समुचितम्, वस्तुगत्या तु मयाऽत्र कर्तव्यमकर्तव्यं वा किमपि न ज्ञायत इति निश्चितमतबोधनार्थं पुनरर्जुनस्य भगवत्सविधे प्रपन्नस्य कर्तव्याकर्तव्योपदेशार्थं भगवतः प्रवृत्तिश्चावतारितेति गीतावतारणग्रन्थार्थः ॥

॥ अर्जुनकृतप्रपत्तिस्वरूपादि ॥

अत्रार्जुनेन—"शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्"(२-७)इति कृता प्रपत्तिर्यदि मुख्या शरणागतिः, तर्हि तं प्रति कर्मयोगाद्युपदेशो वितथः, इत्यतिमात्रकार्पण्यमेवात्र विवक्ष्यते, या तु—"कार्पण्यदोषोपहतस्वभाव" इति दोषत्वेनैवार्जुनेन गृह्यते, इति "समित्पाणिः श्रोत्रियमि"ति वचनसिद्धमुपसदनमेवात्र विवक्ष्यते। सति चैवम्—"

"सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ॥" (१८-६९)

इत्यत्र विवक्षिता शरणागतिः, इयं च शरणागतिर्निमित्तैव। अतिमात्रकार्पण्यरूपा हि प्रपत्तिः कर्मयोगाद्यधिकारस्यैव प्रयोजिका, नतु युद्धादिस्वधर्मत्यागाधिकारस्य, योऽर्जुनेन काम्यते, इत्यतिमात्रकार्पण्यरूपां प्रपत्तिमाश्रितस्यार्जुनस्य कर्मफलत्याग एवाधिकार इत्येव गीतार्थ इत्यवगम्यते। अत एव—

"कर्मण्येवाधिकारस्ते मा फलेषु कदाचन॥" (२-४७)

इति भगवतोऽर्जुनं विशेष्यैव कर्माधिकारमात्रमुपदिश्यते, इति सर्वकर्मसंन्यासपूर्वकात्मज्ञाननिष्ठारूपशरणागतिः "सर्वधर्मानि"ति श्लोके विवक्षितेत्यद्वैतिनां विवरणम्॥

॥ ज्ञानयोगप्राधान्येऽपि कर्मयोगोपयोगप्रकारादिचर्चा॥

तेन च—अर्जुनस्यानित्यात्मज्ञाननिष्ठस्य संन्यासाधिकारनिषेधेन कर्मयोगाधिकारेण युद्धे प्रवर्तनमेव गीतार्थः। तथाच—"सर्वधर्मानि"ति श्लोके फलत्यागमात्रविवक्षयाऽर्जुनस्य युद्धे प्रवर्तनमशक्यमिति भगवदानन्दतीर्थशङ्काऽपि—परास्ता। तथाच यदि "किं मे राज्येन गोविन्दे"ति वदन्तमर्जुनं प्रति, यदि फलेच्छा, तर्हि कर्तव्यबुद्ध्या युद्धं क्रियताम्, नतु ततो विरत्या धर्मान्तरग्रहणम्—"गुरूनहत्वा हि महानुभावान् श्रेयो भोक्तुं भैक्ष्यमपीह लोके" इत्युक्तरीत्या। यतः "श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्।" आत्मज्ञाननिष्ठावन्तं प्रति हि सर्वकर्मानधिकारेण सर्वतो विरतिः समुचिता, नतु तद्विरहितम्। अत एव—अर्जुन प्रति कर्मयोगप्रकरणेऽप्यात्मस्वरूपोपदेशः सङ्गच्छते। भगवद्रामानुजमते तु—नित्यत्व-सर्वगतत्वाप्रमेयत्वादिना प्रत्यगात्मन उपदेशः कथं कर्मयोग उपयुज्यते, यत्र तस्यापि कर्मयोगेन साकं भक्तियोग एवोपकारकता मन्यते। अत्र हि प्रकरणे कर्मयोगाधिकारबाधकात्मज्ञाननिष्ठैवार्जुनं प्रति बोध्यते, येन स्वयमेवार्जुन उक्तत्रेधात्मज्ञाननिष्ठाविरहमात्मनोऽवगत्य स्वस्य युद्धोपरत्यनधिकारं ज्ञास्यति, युद्धे च सर्वविधसंशयनिरसनेन स्वयमेव प्रवर्त्स्यति चेत्यद्वैतिनां मतम्। अत एव—"स्थित्वाऽस्यामन्तकालेऽपि ब्रह्म निर्वाणमृच्छति।" इति कर्मयोगाधिकारबाधकप्रत्यगात्मज्ञाननिष्ठैव मोक्षसाधनमिति द्वितीयाध्यायोपसंहार उपपद्यते। अन्येषु तु मतेषु—"स्थित्वाऽस्यामि"त्यत्र यत्र द्वैतमते ब्रह्मज्ञानिनः स्थितिर्लक्षणमेव ब्राह्मी स्थितिर्मन्यते, विशिष्टाद्वैतमते तु—नित्यात्मज्ञानपूर्विकाऽसङ्गे कर्मणि स्थितिर्ब्राह्मी स्थितिर्मन्यते, तत्र ब्रह्मज्ञानस्य कर्मयोगप्रसङ्गे निरूपणम्, ब्रह्मपदेन केवलात्मज्ञानमात्रविवक्षणं वा न युज्यते, विना प्रत्यगभिन्नसंविन्मात्रैक्यविवक्षाम्, इत्यद्वैत्यभिमता ज्ञाननिष्ठैव कर्मसंन्यासपूर्विकोपसंह्रियत इति वक्तव्यम्। तेन च स्वयमेवार्जुनेन ज्यायस्त्वं ज्ञानयोगविषये ज्ञातमपि स्वाधिकारविरहेण न कार्यकारि संवृत्तम्। अत एव—तृतीयाध्यायोपक्रमे

"ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन।
तत्किं कर्मणि घोरे मां नियोजयसि केशव॥" (३-१)

इति श्रीकृष्णसविधे प्रश्नोऽर्जुनस्योपपद्यते। मतान्तरयोस्तु—प्रत्यगात्मज्ञानयोगस्यापि कर्मयोगवद् भक्तियोगोपकारकत्वेन कर्मयोगसमानत्वाद् न ज्यायस्त्वम्, न वा तृतीयाध्यायोपक्रमगतस्य प्रश्नस्यास्योपपत्तिः ॥

द्वितीयाध्याये हि—यस्यात्मनो नित्यत्वादिकं जन्म-मरणाद्यभावो वा प्रतिपाद्यते, स हि प्रत्यगभिन्नसंविन्मात्ररूप एव, न त्वहमर्थः, तस्याणुपरिमाणस्योत्क्रान्ति-गत्यादियोग्यस्य जन्म-मरणादिनिषेधासंभवात्। यस्य तु मुक्तस्य न जन्म मरणाद्यसंभवः, स तु न कर्माधिकारी तत्रापीति तादृशात्मज्ञानयोगस्य न कथमपि कर्मयोगेनाद्वैतमत इव सङ्गतिः, नवा भक्तियोगेन ; मुक्तस्य तस्योभयत्रानधिकारात्। अतः सर्वकर्मसंन्यासपूर्वकात्मज्ञानमेवात्र कर्मयोगप्रकरणेऽर्जुनस्य तत्रानधिकारं प्रतिपादयितुमनूद्यत इत्येव वक्तव्यम् ॥

॥ कठवल्ल्येकवाक्यता गीताद्वितीयाध्यायस्याद्वैतमत एव ॥

अर्जुनस्य भीष्मादीनां वधे स्वरूपनाशापत्तिरिति शङ्कां समाधातुं हि द्वितीयाध्याय आत्मनित्यत्वाद्यवतार इति सर्वसम्मतम्, इति "येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके"इति कठवल्लीप्रश्नोत्तरमेव गीताशास्त्रमिति कठवल्ल्येकवाक्यतैवात्र प्राधान्येन विवक्ष्यते। अत एव—आत्मनित्यत्वनिरूपणप्रसङ्गेन द्वितीयाध्याये—

"य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥" (२-१९)
"न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥" (२-२०)

इति कठवल्ल्यर्थ एव यथावदनूद्यते। इमौ हि मन्त्रौ—"येयं प्रेते"इति प्रश्नोत्तरतामेवार्हतः ; प्रश्नान्तरस्यासंभवादित्यद्वैतिनः, येषां दृष्ट्या—येयं प्रेत इति प्रश्नविषय एव—"अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात्। अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वदे"ति प्रश्नेनाप्यनूद्यते, नतु जीवविषयकप्रश्नान्तरम् ; वरत्रयप्रतिज्ञाविरोधात्। सति चैवं प्रत्यगभिन्नब्रह्मस्वरूपसंविन्मात्रात्माभिप्रायैव कठवल्लीति वक्तव्यम्। "येयं प्रेते"इति वाक्ये मुक्तान्तर्यामिण एव प्रश्नः, "अन्यत्र धर्मादि"त्यत्र जीवात्मस्वरूपप्रश्न इति पक्षे तु द्वैत-विशिष्टाद्वैताभिमते न केवलं वरत्रयविरोधः, किन्तु जीवस्य धर्माधर्माद्यतीतत्वस्याप्यसंभवः। यदि मुक्तात्मदृष्ट्या, शुद्धात्मदृष्ट्या वा धर्माधर्माद्यतीतत्वम्, तर्हि गीतायामपि तमेवात्मानमधिकृत्येमौ श्लोकाविति तैर्वक्तव्यम्। सति चैवम्—तं कर्मयोगानधिकृतमुद्दिश्य नित्यत्वाद्युल्लेखपूर्वक कर्मयोगविधानं न लगति। अद्वैतमते तु कर्मयोगानधिकृतात्मस्वरूपमेव जीवात्मनो बुद्धेर्वा विविच्य नित्यतया सर्वगततया च बोध्यते, तादृशात्मज्ञाननिष्ठावन्तमेवाधिकृत्य कर्मसंन्यासादिविधय इति निरूपयितुमिति न किमपि विरुध्यते ॥

"येयं प्रेते"इत्यत्र स्वयं नचिकेतसो मृत्युलोकगमनाद् मरणानन्तरमपि जीवो वर्तत इति ज्ञातत्वाद् न जीवात्मविषयोऽयं प्रश्नः, किन्तु परमात्मविषय एवेति तु द्वैत विशिष्टाद्वैतमतानुयायिनो मन्यन्ते। अत्रेदं प्रष्टव्यम् —'प्रेते'पदेन यदि मुक्तस्य ग्रहणम् , तर्हि बद्धस्यान्तर्यामी कथं निर्णीयते ? यदि वचनान्तरबलात्, तर्हि कथं मुक्तस्यापि स तेनैव ज्ञास्यते, इति प्रश्नानुपपत्तिः समानैव। वस्तुतस्तु मृत्युलोकगमनेनापि भूलोके ज्ञाते जन्म-मरणे एव दृढीकृते, उच्यते च मृत्युनापि—"पुनः पुनर्वशमापद्यते मे"इति। तथाच मरणमस्ति, नास्तीति प्रश्नो न स्वसमाधेय इति मत्वैवायं प्रश्नः। अत एव कठवल्ली न कुत्राप्यन्तर्यामितयाऽत्मानं प्रतिपादयत्यन्तर्यामिब्राह्मणोक्तदिशा, किन्तु बुद्धिविविक्ततया, तदुपहितजीवातिरिक्ततया वा। अत एव "गुहां प्रविष्टावात्मानौ"इत्यात्मद्वयनिरूपणम्, नतु जीवशरीरकात्मनिरूपणम्। प्रश्नानुपपत्तिस्तु—जीवस्योत्क्रान्तिस्थस्यापि विषये तदुत्क्रान्तिरस्ति वा, न वा, मृतानामुत्क्रान्तानां यद्रूपम्, तदेवाहमर्थात्मकं किं जीवरूपम्, उतान्यदेव किमपि तस्य रूपमिति जीवोत्क्रान्तिविषयक एवायं प्रश्नः। तेन च बद्धानामिव ब्रह्मज्ञानिनामपि जनन-मरणे किं नित्ये ? यदि न स्तः, तर्हि किं नामात्मनो रूपं तादृशम्, इति प्रश्नार्थः पर्यवस्यति। अस्ति च जीवस्य मुच्यमानस्योत्क्रान्तिविषये मतभेदः, यतो ब्रह्ममीमांसायामपि "प्रतिषेधादिति चेन्न शारीरात्" "स्पष्टो ह्येकेषामि"त्यत्र सा चिन्ता सर्वैरप्याचार्यैर्मन्यत एव। इयान् विशेषः—यद् द्वैताचार्यादीनां मते विदुषोऽप्युत्क्रान्तिरस्ति, इति जीवसामान्यस्य विमुच्यमानदेहस्य साऽस्तीति मन्यते, अद्वैतिभिस्तु—"अत्र ब्रह्म समश्नुते" "न तस्य प्राणा उत्क्रामन्ती"त्यादिवचनबलाद्विमुच्यमानदेहस्य विदुषो नोत्क्रान्तिरिति मन्यत इति न प्रश्नानुपपत्तिः। अतो जीवात्मविषयक एवात्र प्रश्नः। उत्तरं तु तस्य संविद्रूपेण विदुष आत्मा सर्वदैकरूप इति नोत्पत्ति-विनाशादिविकारयोग्यः सः, इति विनाऽपि मृत्युलोकप्राप्तिं संविद्रूपेणात्माऽस्तीति न दोषलेशोऽपीति। सर्वथा तु—धर्माधर्माद्यतीतसंविद्रूपजीवात्मज्ञानवतामेव धर्माधर्माद्यत्ययेन सर्वकर्मसंन्यासपूर्वकात्मज्ञाननिष्ठा, नार्जुनस्य, तत्सदृशस्य वेति निरूपणमेव गीतार्थ इति वक्तव्यम्। अत एव—अत्र प्रकरणे गीतायां जीवस्य "नित्यः सर्वगतः स्थाणुरि"ति सर्वगतत्व निर्दिष्टमुपपद्यते, मतान्तरे तु सर्वदा जीवस्य स्वतोऽणुपरिमाणत्वात् सर्वगतत्वं नोपपद्येत ॥

॥ जीवसर्वगतत्वाद्युल्लेखस्य द्वितीयाध्यायादिगतस्याद्वैतमत एवोपपत्तिः ॥

किं बहुना—

"न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः।
न चैव न भविष्यामः सर्वे वयमतः परम् ॥" (२-१२)

इति परमात्मनोऽपि सत्ता सार्वदिकी दृष्टान्तविधया, प्रतिपाद्यविधया वाऽत्र या व्यवस्थाप्यते, सा तु जीव-ब्रह्मणोरभिन्नं रूपं गृहीत्वैव नित्यत्वादिकम्, न तु स्वरूपेण जीवस्येति गमयति। मतान्तरे तु परमात्मनित्यत्वमत्र किमर्थमनूद्यते ?

॥ "न त्वेवाहमि"ति श्लोकार्थविमर्शः ॥

सति चैवं 'त्वमहमिमे' इत्यादिभेदनिर्देशोऽप्युपाधिकृत एव, न तु वस्तुकृत इति ज्ञाप्यते। कल्पितं भेदमादायैव हि व्यवहारनिर्वाह इति तु तत्त्वम्। यथात्र भेदव्यवहारस्य कल्पितत्वज्ञानेऽपि भगवतोऽवतारपुरुषस्याधिकारिकपुरुषाणामिवाहार्यभेदमादायोपदेशकत्वादिनिर्वाहो 'लोकवत्तु लीलाकैवल्य'न्यायेन, तथाऽन्यत्र व्यक्तम्, इति नाद्वैतमतेऽत्र विवक्षितेऽप्युपदेशानुपपत्तिः, न वा बाधितानुवृत्त्यनुपपत्तिः। श्रौतं ह्यात्मनित्यत्वं न दृष्टान्तमपेक्षते, इति दृष्टान्तविधया परमात्मनित्यत्वव्यवस्थापनं वितथमेव। आत्मत्वस्य नित्यत्वप्रयोजकत्वे तु न दृष्टान्तापेक्षा। वस्तुतस्तु परमात्मपदेनेश्वरस्यैव विवक्षणाद् न तत्र जीवात्मसाधारणं मुख्यमात्मत्वम्। द्वैतादिमते हि परमात्मैवात्मपदमुख्यार्थ इति स्वीकाराद् अहमर्थस्य च गौणात्मत्वात् तेन रूपेणैव परमात्मनोऽपि नित्यत्वम्, न त्वीश्वरत्वादिरूपेण; तेन रूपेण तस्यापि बाधादिति सर्वकर्मसंन्यासपूर्वकात्मज्ञाननिष्ठापरतैवात्र स्वरसा प्रतीयते। देहसम्बन्धमौपाधिकं वा रूपमादाय तु नात्मनो जन्माभावः, नाशाभावो वा। अत एव—

"देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति॥" (२-१३)

इति जन्मान्तरवचनं जीवानाम्, भगवतः श्रीकृष्णस्यार्जुनस्य च जीवस्य "बहूनि मे व्यतीतानि जन्मानि तव चार्जुन।" इति चोपपद्यते; अन्यथेश्वररूपेण भगवतोऽपि जन्माद्यभाव एव 'न त्वेवाहमि'त्यत्रेति विवक्षायां तद्विरोध आपद्येत। "न त्वेवाहमि"त्यत्र भूतकालसत्ताया बाधापरपर्यायाया इव भाविन्या अपि तस्या एव निषेधे तात्पर्यात्तु—न पाञ्चरात्रप्रक्रियोक्तरीत्या जीवोत्पत्तिविनाश एवोक्तवचनतात्पर्यम्। इदं चाद्वैतमत एव तात्पर्य उपपद्यते॥

॥ "नासतो विद्यते भावः" इति श्लोके मतत्रयार्थविमर्शः॥

एतेन—

"नासतो विद्यते भावो नाभावो विद्यते सतः।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः॥" (२-१६)

इति श्लोकोऽपि—व्याख्यातः। अत्र—असतः प्रकृतेर्ब्रह्मणश्चात्मन इवाभावो नास्तीति दृष्टान्तार्थं बोध्यत इति द्वैतभाष्यम्। तच्च ब्रह्मनित्यतायाः—"न त्वेवाहमि"त्यत एव दृष्टान्तविधया सिद्धत्वात् पुनरपि तन्नित्यत्ववर्णने तया विधया वितथम्। प्रकृतिनित्यत्वं च "त्रयोदशाध्यायोपसंहारे—"भूतप्रकृतिमोक्षं चे"ति प्रकृतिविलयस्योपपादनाद्विरुद्धम्। अधिकं तु तृतीयषट्कार्थविचारावसरे विशदीभविष्यति। अतः संविन्मात्रातिरेकेण सर्वस्य प्रकृत्यादेर्मिथ्यात्वनिरूपणपूर्वकं संविन्मात्रात्मज्ञानमेव मुख्यात्मज्ञानम्, इति "सदेव सोम्येदमि"त्यादौ सत्पदेन विवक्षितमेव मुख्यात्मस्वरूपमिति बोधनार्थमेवायं श्लोकः। तेन च जड-

प्रपञ्चेषु कार्येषु च कारणात्मना चेतनेषु संविदात्मना चानुवर्तनरूपस्यैकत्वस्य विवक्षणादद्वैतवाद एव पर्यवसानम्। भगवद्रामानुजास्तु—देहात्मनोरनित्यत्व नित्यत्वे अनेन बोध्येते इति—वदन्ति। इदं तु "अर्जुनेन देहस्यासत्त्व-स्वभावस्य प्रथमत एव ज्ञातत्वात्, आत्मनित्यत्वस्य "न त्वेवाहमि"त्यनेनैव निरूपितत्वाद् निष्प्रयोजनम्। अद्वैतमते त्वेकविज्ञानेन सर्वविज्ञानोपपादनार्थं संविद्रूपातिरिक्तात्मरूपाभावबोधनेन सार्थक्यान्न विरोधः। अत एव—"अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः॥" इति पृथग् देहात्मनोरसत्त्वं सत्त्वं च विशदं प्रतिपाद्यमानमपि सप्रयोजनम्।

॥ "आश्चर्यवत्पश्यती"ति श्लोकार्थविमर्शः ॥

अत एव—"आश्चर्यो वक्ता कुशलोऽस्य ज्ञाता" इति कठवल्ल्यां परमात्मपरतया सर्वैरपि विव्रियमाण-स्यैव समानार्थकतया तदेकवाक्यतापत्तियोग्यस्य—"आश्चर्यवत्पश्यति कश्चिदेनमि"त्यस्य द्वितीयाध्याय आत्मविषयतयैवावतारो भगवत उपपद्यते, येन हि जीव-परमात्मनोरेकत्वमभिप्रेत्यैवात्मज्ञाननिष्ठा द्वितीयाध्यायेन प्रतिपाद्यत इत्यवगम्यते ; अन्यथा तु तयोर्भिन्नवाक्यत्वमापद्येत ॥

॥ अनुगीतानुसारेणाद्वैतानुसृतरीतिरेव कर्मयोगस्याश्रयणीया ॥

कर्मयोगेन जन्मान्तरीयेणास्मिन् जन्मनि ज्ञानोत्पत्तौ गीतातात्पर्यस्य पूर्वमेवोपपादनाद् ब्रह्मविद्यापेक्षि-तोऽधिकार्यप्यद्वैतानुगुण एव, न द्वैत-विशिष्टाद्वैतानुगुण इति प्रथमषट्कपर्यालोचनेनावगम्यते। आत्मज्ञानसाधन-सर्वकर्मसंन्यासाधिकारसंपादकतयैव हि कर्मयोगः, भक्तियोगश्च साक्षादात्मज्ञाननिष्ठासंपादकतया, प्राधान्यं तु ज्ञानयोगस्यैव। अत एवानुगीतायां षट्चत्वारिंशाध्याये—

"गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथवा पुनः।
य इच्छेन्मोक्षमास्थातुमुत्तमां वृत्तिमाश्रयेत्।
अभयं सर्वभूतेभ्यो दत्त्वा नैष्कर्म्यमाचरेत्॥" (४६-१७)

इति सर्वकर्मसंन्यास एव मोक्षसाधनं मन्यते, नतु सर्वकर्मफलत्यागमात्रम्, इति "सर्वधर्मान् परित्यज्ये"ति गीताऽपि तदेकवाक्यतया कर्मसंन्यासमेव कर्मयोगापेक्षयाऽपि प्रधानं मन्यते ॥

॥ सर्वकर्मसंन्यासस्य गीतानुगीतोभयसंमतत्वम् ॥

अत एव—त्यागवत् संन्यासस्यापि सात्त्विकत्वमनुगीतायामष्टाचत्वारिंशाध्याये—

क्षमा धृतिरहिंसा च समता सत्यमार्जवम्।
ज्ञानं त्यागोऽपि संन्यासः सात्त्विकं वृत्तमुच्यते ॥" (४८-८)

इति प्रतिपाद्यते। इयान् विशेषः—यत् त्यागे तामसादिविभागो भवति, कर्मणि वा, नतु संन्यासे ज्ञाने वेति ॥

अत एव गीतायामष्टादशाध्यायादौ कुत्रापि न संन्यासादित्रैविध्यमुपपादितम्, इति सर्वकर्मसंन्यासाधिकार सिद्ध्यर्थमेव कर्मयोगाधिकारः, नतु ततः परमपीति सिद्ध्यति। अत एवानुगीतायामूनविंशाध्याये—

"नैव धर्मो न चाधर्मो पूर्वोपाचितहायकः।
धातुक्षयप्रशान्तात्मा निर्द्वन्द्वः स विमुच्यते॥ (१९-७)
अकर्मवान् विकांक्षँश्च पश्येज्जगदशाश्वतम्॥" (१९-८)

इत्यादिना सर्वकर्मसंन्यासपूर्वकात्मज्ञाननिष्ठाख्यमोक्षधर्म एव गीतापर्यवसानं निरूप्यते। यतोऽनुगीतायां कर्मयोगो लेशतोऽपि न परामृष्टः। इदमेवानेनावगम्यते—यद् गीतायाः कर्मयोगस्यापि संन्यासाधिकारसम्पादनपर्यन्तमेवोपयोग इति। एतेन—"नैव धर्मो न चाधर्मः"इत्याद्यनुगीतावाक्यानामपि सर्वकर्मफलत्याग एव तात्पर्यमिति—परास्तम्। स्पष्टमेवानुगीतायां पूर्वोक्तविधया संन्यासस्य सर्वात्मना सात्त्विकत्वस्यैव व्यवस्थापनात्तन्निषेधतात्पर्यकल्पनाया अयोगात्। अत एव तत्रैव पञ्चत्रिंशाध्याये—

"ज्ञानं त्वेव परं ब्रह्म संन्यासं तप उत्तमम्।
यस्तु वेद निराबाधं ज्ञानतत्त्वं विनिश्चयात्॥ (३५-१६)
सर्वभूतस्थमात्मानं स सर्वगतिरिष्यते। (३५-१७)
तथैवैकत्व-नानात्वे स दुःखात् परिमुच्यते।
यो न कामयते किञ्चिन्न किञ्चिदभिमन्यते॥ (३५-१८)
इहलोकस्थ एवैष ब्रह्मभूयाय कल्पते॥" (३५-१९)

इति संन्यासपूर्वकात्मज्ञाननिष्ठैव वेदविन्नेति व्यवस्थापितमुपपद्यते। अन्यथा हि तत्रैव पञ्चत्रिंशाध्याये—

"ब्रह्मचारिकमेवाहुराश्रमं प्रथमं पदम्॥ (३५-४०)
गार्हस्थ्यं तु द्वितीयं स्याद्वानप्रस्थं ततः परम्।
ततः परन्तु विज्ञेयमध्यात्मं परमं पदम्॥" (३५-४१)

इति संन्यासस्यैव परमपदत्वं प्रतिपादितमनुपपन्नं स्यात्॥

॥ फलत्यागस्य स्वरूपतस्सात्त्विकत्वाभावः, किन्तु कर्मसंन्यासस्यैव ॥

सति चैवं फलत्यागमात्रस्य सात्त्विकत्वोल्लेखः सात्त्विककर्मविभागार्थ एव, नतु त्यागे स्वरूपतस्सात्त्विकत्वे केवलासक्तियोगे वा गीतायास्तात्पर्यम्। अत एव—

"अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते।
यष्टव्यमित्येव मनः समाधाय स सात्त्विकः॥" (१७-११)

इति सात्त्विकतया व्यवस्थापितः सात्त्विको यज्ञ एवाष्टादशाध्याये—

"कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ।
सङ्गं त्यक्त्वा फलं चैव स त्यागस्सात्त्विको मतः ॥" (१८-७)

इति सात्त्विकत्यागत्वेन स्तूयते कर्मयोगं प्रशंसितुम् । सति चैवम्—

"नियतस्य तु संन्यासः कर्मणो नोपपद्यते ।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥" (१८-७)

इति सर्वकर्मसंन्यासस्य तामसत्ववर्णनं 'नहि निन्दा'न्यायेनैव नेयम् । न हि—त्याग-संन्यासयोर्भेदवर्णनानन्तरं संन्यासस्यैव त्यागत्वनिरूपणमन्यथोपपद्यते, इति संन्यासाधिकारसंपत्तावेव संन्यासः सर्वकर्मत्यागरूपो युक्तः, न त्वन्यथेत्येव—

"न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।
नच संन्यसनादेव सिद्धिं समधिगच्छति ॥" (३-४)

इत्यादिवचनैरवगम्यते । अत एव ह्यनुगीतायां षट्त्रिंशाध्याये—

"संमोहोऽज्ञानमत्यागः कर्मणामविनिर्णयः ।
स्वप्नः स्तम्भो भयं लोभः शोकः सुकृतदूषणम् ॥" (३६-१२)
"सर्व एते गुणा वृत्तास्तामसाः संप्रकीर्तिताः ॥" (३६-१६)

इति कर्मणामत्यागस्यैव तामसत्वं प्रतिपादितमुपपद्यते । न केवलमियदेव, किन्तु तत्रैवाष्टत्रिंशाध्याये—

"निर्ममो निरहङ्कारो निराशीः सर्वतः समः ।
अकामभूत इत्येव सतां धर्मः सनातनः ॥ (३८-५)
विस्रम्भो ह्रीस्तितिक्षा च त्यागः शौचमतन्द्रिता ।" (३८-६)
"उपेक्षा ब्रह्मचर्यं च परित्यागश्च सर्वशः ॥" (३८-८)

इत्यादिना सर्वधर्मत्यागस्य स्वरूपत एव सात्त्विकत्वं प्रतिपादितम् । अतो गीतायां सर्वकर्मसंन्यासो न विवक्षित इत्येव तामसी कथा ; तत्पूर्वकात्मज्ञाननिष्ठायामेव परमतात्पर्यात् ॥

एतेन—भक्तियोगप्राधान्यवादोऽपि—परास्तः । यतः कर्मयोगस्येव भक्तियोगस्यापि न लेशतोऽप्यनुगीतायां परामर्शः, इति मुक्तिसाधनं गीताभिमतमप्यद्वैतानुगुणमेव, न मतान्तरानुगुणम् । कर्मयोगप्रक्रमस्तु "न कर्मणामनारम्भादि"ति नीत्याऽनधिकारिणां संन्यासाधिकारसंपत्त्युपयोगितयैवेत्येव गीतार्थः । तदयं सिद्धः प्रथमषट्कार्थः—कर्मयोगस्यापि परम्परया ज्ञानयोगेऽद्वैताभिमतेऽधिकारसंपादकतयैवोपयोगः, नतु भक्तियोगोपपादकतया, प्राधान्येन, मोक्षोपयोगितया वा । अत एव द्वितीयाध्यायादौ कर्मयोगप्रकरणेऽपि ज्ञानयोगरूपफलेनैवोपसंहारः, नतु भक्तियोगरूपेण फलेन ॥

॥ द्वितीयादिषष्ठान्ताध्यायानामद्वैतरीत्या ज्ञानयोगसाधनत्वेन कर्मयोगपरता ॥

तत्र द्वितीयाध्याये—"एषा ब्राह्मी स्थितिः पार्थे"ति ज्ञानयोगेनैव समाप्तिरिति स्थितमेव । तृतीयाध्यायेऽपि—

"तस्मादसक्तः सततं कार्यं कर्म समाचर ।
असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः ॥" (३-१९)
"कर्मणैव हि संसिद्धिमास्थिता जनकादयः ॥" (३-२०)
"एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ।
जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥" (३-२७)

इत्यत्रापि ज्ञानयोगेनैवोपसंहारः । एतेन—तुरीयाध्यायोऽपि—व्याख्यातः । सोऽपि कर्मयोगेनोपक्रम्य—

"श्रेयान् द्रव्यमयाद्यज्ञाद् ज्ञानयज्ञः परंतप ।
सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥" (४-३३)

इत्यादिना—

"तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनाऽऽत्मनः ।
छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥" (४-४२)

इति ज्ञानयोगेनैवोपसह्रियते। पञ्चमाध्यायोऽपि—सन्यास कर्मयोगयोः कर्मयोगस्यार्जुनविषये विशेषत्वमुपक्रम्यापि—

"भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥"

इति जीव-ब्रह्माभेदज्ञानेनैवोपसहरति । अत्र "भोक्तारं सर्वलोकेश्वरं ज्ञात्वा"इत्यनेन "क्षेत्रज्ञं चापि मा विद्धि" "तत्त्वमसी"त्यादिमहावाक्यार्थ एव प्रत्यभिज्ञायत इति भगवत्पादाभिमतज्ञानयोगेनैवोपसंहारः ॥

एतेन षष्ठाध्यायोऽपि—व्याख्यातः । सोऽपि कर्मयोगिनः संन्यासित्वेन प्रशसामुपक्रम्य—

"प्रयत्नाद्यतमानस्तु योगी संशुद्धकल्मषः ।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥" (६-४५)

इति कल्मषनिवृत्तिद्वारा जन्मान्तरीयकर्मयोगेनापि संन्यासाधिकारादिना परगतिप्राप्तिवर्णनेन संन्यासपूर्वकात्मज्ञाननिष्ठैव मुख्यार्थो गीताया इति गमयत्येव ॥

॥ प्रथमषट्कप्रतिपादितजीवस्वरूपस्याद्वैतमात्रानुगुणता ॥

जीवस्वरूपं तु प्रथमषट्केनावगतमद्वैतानुगुणमेव ; तत्र जीवसर्वगतत्वस्य बहुशो निरूपणात् । तेन च जीवाणुत्ववादस्य निरासप्रतीतेरद्वैतवाद एवानुगुण्यम् । अत्रानुसन्धेयौ श्लोकाविमौ—

"अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।
विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥" (२-१७)
"अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥" (२-२४)

इति । अत्र हि सर्वगतत्वं जीवस्यात्मत्वस्य जातिविशेषत्वेन चेतनत्वेन सर्वत्र व्याप्त्या, यद्वा सर्वानुप्रवेशयोग्यत्वेनेति भगवद्रामानुजानुयायिनः । आनन्दतीर्थानुयायिनस्तु—इदं सद्रूपब्रह्मपरमेव, न जीवात्मपरमिति मन्यन्ते, इति "नासतो विद्यते भावः" इति श्लोकगतं सत्पदार्थं विवेक्तुमेवायं श्लोक इति तन्मते प्रासङ्गिकार्थपरत्वमस्य श्लोकस्य । अत्र प्रथममते क्लिष्टकल्पना, द्वितीयमते तु प्रकृतार्थपरित्यागः, अद्वैतमते तु—जीवस्यैव व्यापकरूपमादाय यथाश्रुतमेव साधु । एतेन—द्वितीयश्लोकोऽपि—व्याख्यातः । तत्राप्यनुप्रवेशयोग्यत्वेनैव सर्वगतत्वं मन्यते विशिष्टाद्वैतमते, द्वैतमते त्वीश्वरसरूपत्वेन सर्वगतत्वादि विशेषणम्, अथवा सर्वगतस्थश्चासावणुश्चेति विवरण मन्यते । उभयत्र क्लेशस्तु स्थिर एव, नैव त्वद्वैतमते ॥

जीवात्मनो वेदान्तप्रतिपाद्यस्य व्यापकत्वमेव, न त्वणुपरिमाणत्वमिति तु कुमारिलपादा अपि मन्यन्त इत्यधिकारिनिर्णयः, जीवात्मस्वरूपव्यवस्था चाद्वैतमतानुसारिण्येव प्रथमषट्काभिमता । तत्र प्रथमषट्केन कर्मयोगः, अन्तिमेन ज्ञानयोगश्चेति क्रमः, ज्ञानयोगोऽय न जीवात्मविषयः, किन्तु कर्मानधिकारिपरमात्मविषय इति सूच्यते, इति मधुसूदनसरस्वती । सति चैवं प्रथमषट्कं गीताया अद्वैतानुगुणमेव । अत्र स्थितप्रज्ञताया कर्मयोगफलत्वनिरूपणेन जीवन्मुक्तावस्था, तदा कर्मानधिकारादिकं चाद्वैतवादानुगुणमेव वर्तत इत्याद्यन्यत्र व्यक्तम् । कर्मयोगफलं तु नैष्कर्म्यमेव, यत्र केवल समाध्यवस्थैवेति तु स्पष्टमनुगीता वदति । सांप्रतं त्वेतावदेवेति प्रथमषट्कार्थविमर्शः ॥

---

# ॥ भगवद्गीताद्वितीयषट्कम् अद्वैतदर्शनं च ॥

## ॥ अष्टमं व्याख्यानम् ॥

॥ भक्तियोगस्य सर्वसाधारण्यम् । तत्र विशेषश्च ॥

द्वितीयषट्कार्थो हि भक्तियोगः । स तु द्वैत-विशिष्टाद्वैत द्वैताद्वैत-शुद्धाद्वैत केवलाद्वैतादिसर्वदर्शनसम्प्रतिपन्नः प्रायेण । इयान् विशेषः—यद् भक्तियोगविषयः सर्वथाऽसत्य इति मीमांसकाः, पारमार्थिकसत्य

इति केवलाद्वैतवादिव्यतिरिक्ताः सर्व एव, केवलाद्वैतवादिनस्तु स'व्यावहारिकसत्य इति। तत्र प्रथममते न तस्य कारणत्वादि, अन्यत्र तु तदूरीक्रियते। मिथ्याभूतस्याप्यर्थक्रियाकारित्वे, का कथा व्यावहारिकसत्यानाम्? तत्र द्वैतादिमते सगुणस्य तदभिमतमुक्तिपर्यन्त काङ्क्ष्यमाणां तु सत्तां नाद्वैतिनो वारयन्ति, किन्त्वनेकजीववादे यावत्सर्वमुक्ति स्वरूपेण वर्तमानस्यापि तस्य सर्वमुक्तावेव बाधेन निर्गुणब्रह्मभावाख्यायां मुक्तावेवाद्वैतवाद्यभिमतायां तां वारयन्ति, इति तदभिमतमुक्तेर्गौणमुक्तित्वस्यैवाद्वैतिभिः स्वीकारात्, यदि तदभिमतां मुक्तिमभिप्रेत्य सगुणस्य ब्रह्मणः तदभिमतं पारमार्थिकत्वम्, तर्हि सिद्धसाधनमेव। निर्गुणब्रह्मवादस्य गन्धर्वनगरतावादस्तु—श्रौतोऽपि न स श्रूयते, दृश्यते वाऽद्वैतवादिव्यतिरिक्तैः,इति तु "नैष स्थाणोरपराधो यदेनमन्धो न पश्यती"ति।

स्वतःप्रामाण्यवादिनो हि सर्वे वेदान्तिनो यावद्बाधग्रहं प्रवृत्तिप्रयोजकं प्रामाण्यं कुतो न स्वीकर्तुमर्हन्ति? इत्यद्वैतवादे बाधदर्शनपर्यन्तं सगुणवाक्यप्रामाण्यादिव्यवहारो न विरुध्यते। दृष्टोऽपि बाधो न बाध इति तु हठवाद एवेति त्वद्वैतिनः। न चाद्वितीयब्रह्मतत्त्वस्यापि बाधकं किमपि वेदवाक्यमपौरुषेयतया मन्यमानं सर्ववेदान्तदर्शनसम्मतमेकमप्यस्ति, येन निर्विशेषं ब्रह्मापि बाध्यमानत्वाद् न पारमार्थिकमिति स्यात्, नवा न ज्ञातमेव वेदान्तवाक्यैः; निर्विशेषोपक्रमेण प्रवृत्तानामक्षरविद्यादीनाम्, "अथात आदेशो नेति नेति" इत्यध्यारोपापवादप्रक्रियया प्रवृत्तानामपरेषां च बहूनां वाक्यानामाम्नानदर्शनात्। अतोऽद्वैतिनां निर्गुणवाद-मसत्कल्पं मत्वा सगुणेनैव वेदान्तपर्यवसानवादो न क्षोदक्षम इत्यद्वैतिनः। "याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः" इति प्रश्नोपनिषद्वाक्यमपि यावत्कालं प्रपञ्चसत्यत्वमेव गमयति, नतु निर्विशेष-तावस्थां ब्रह्मणो बाधते, इत्यखण्डाकारसाक्षात्कारेण कालादीनामपि बाधात् तावत्पर्यन्तसत्तामेव तद्बोचरयति। त्रिकालाबाध्यता नाम ब्रह्मणो घटादीनामिव कदापि स्वरूपतोऽभावाप्रतियोगित्वम्, कालविशेषावच्छिन्नाभाव-प्रतियोगित्वाभावरूपः। अत्र कालत्रयपदेनोत्पत्तिकालः, स्थितिकालः, स्वनाशकालश्च विवक्ष्यते, इति ब्रह्मव्यतिरिक्तानामविद्यापर्यन्तानां नाशकालः प्रसिद्धः, इति कालविशेषेऽभावस्तेषां संभवति, न त्वेवं ब्रह्मणः; ब्रह्मणो नाशकाप्रसिद्ध्या तन्नाशकालस्य दुर्वचत्वात्। अतो निर्विशेषस्य त्रिकालाबाध्यस्य ब्रह्मणः स्वप्रकाशस्य स्वीकारेऽप्यद्वैतिनोऽपि न तस्य भक्तियोगविषयत्वमुररीकुर्वन्ति। निर्गुणब्रह्मसत्त्वासत्त्वविचारस्य हि स्थानं तृतीय-षट्कमेव, यत्र ज्ञानयोगो विषयः, इत्येतावन्मात्रमत्रोपक्षिप्यते—यद् द्वितीयषट्कप्रतिपाद्ये भक्तियोगे न विसंवादो नामेति॥

॥ तत्तद्दर्शनाभिमतभक्तियोगस्वरूप-फलादिविचारावतारणम्॥

सत्यं तु सावधिकम् निरवधिकं चेति द्विविधं श्रुत्यनुभवसिद्धम्। अत एव "प्राणा वै सत्यम्। तेषामेष सत्यम्" "सत्यस्य सत्यम्" "सत्यं चानृतं च सत्यमभवदि"त्याद्याम्नानं तत्र तत्र। सति चैवम्—अद्वैतिनां मते प्रातिभासिकत्व-व्यावहारिकत्व पारमार्थिकत्वविभागो वस्तुस्थितिवाद एव, न कल्पनाविशेषः, इति सगुणवाक्यानां सगुणे, निर्गुणवाक्यानां निर्गुणे च यथाश्रुतमेव प्रामाण्यमङ्गीकृत्याद्वैतमते भक्तियोगो

ज्ञानयोगश्चोभावपि परमात्मविषयावेव मन्येते, इति नाद्वैतमते कुत्रापि क्लिष्टकल्पनया वाक्यानां योजनम्, अन्यथा नयनं वा, मतान्तरानुसारिणस्तु निर्गुणवाक्यान्यन्यथा योजयन्तस्तेषां निर्विशेषरूपार्थे सर्वथाऽप्रामाण्य मन्यन्ते। अतः परमात्मनो भक्तियोग एव ज्ञानयोगोऽपीति मतात्, प्रत्यगात्मज्ञानयोग एव ज्ञानयोगो नामेति मताच्च विलक्षणमद्वैतमतम्। व्यक्तीकरिष्यते चैतदुत्तरत्र व्याख्याने। सांप्रतं तु मोक्षसाधनं भक्तियोग एव द्वितीयषट्कार्थः, इति द्वैत-विशिष्टाद्वैतादिमतम्, गौणमुक्तिसाधनमेव भक्तियोग इत्यद्वैतमतमिति विशेषमात्रं सूच्यते। सति चैवं भक्तियोगपरमपि द्वितीयषट्कं तद्विषयस्य सगुणस्य पारमार्थिकत्वं मन्यते, उत व्यावहारिकत्वम्, एवं भक्तियोगसाध्यः ज्ञानयोगोऽपर एव किमत्र मोक्षसाधनतया मन्यते, उत भक्तियोगेनैव शास्त्रसमाप्तिः, तथा भक्तियोगसाध्यस्य मोक्षस्य जगद्व्यापारवर्जं भोगमात्रसाम्येन ब्रह्मभावरूपस्यैवात्र मुख्यतया प्रतिपादनम्, उतान्यस्येत्यादिविचारा अत्रावतारयिष्यन्ते ॥

॥ सप्तमाध्यायप्रतिपाद्यसगुणब्रह्मतात्त्विकतादिचर्चा ॥

तत्र सप्तमाध्याये—

"ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः।
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥" (७-२)

इत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञया—

"भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥" (७-४)

इत्यहंकारादिकारणतया—

"अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मामिकाम्।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥" (७-५)

इति "सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नाम-रूपे व्याकरवाणी"ति-श्रुतिसिद्धं जीवात्मना स्वस्य व्याकर्तृत्वं चोपक्रममाणः सद्विद्यामेव छान्दोग्यषष्ठाध्यायात्मिकां प्रत्यभिज्ञापयति, इति प्रकृतिपरिणामानामेव जगतां ब्रह्मणो विवर्ततां गृहीत्वा तत्रारोपितैः प्रपञ्चैरेव ब्रह्मणो भक्तियोगविषयस्य सगुणत्वं व्यवस्थापयति। तत्र द्वैतमते—जीवादीनां प्रकृतितयोल्लेखः, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा च क्लेशेनैवोपपद्यते। विशिष्टाद्वैतमते तु जडाजडयोः शरीरत्वेन प्रकृतित्वोल्लेखो न कथमप्युपपद्यते। "ययेदं धार्यते जगदि-"ति तु न सङ्गच्छते; ब्रह्मणो जीवभिन्नस्यैव तन्मते जगन्नियामकत्वापरपर्यायस्य तद्धारकत्वस्य स्वीकारात्। अद्वैतमते तु नैवम्; जीव-ब्रह्माभेदस्वीकाराद् ब्रह्मात्मना जीवस्य ब्रह्मणश्च जगद्धारकत्वाविरोधात्। सति चैव-

मेकविज्ञानेन सर्वविज्ञानमपि जीवेतरस्य ब्रह्मकार्यस्य तद्विवर्तत्वेन, जीवस्य तदात्मत्वेन चेतरेषां बाध्यत्वाद् जीवस्य च स्वरूपत्वादित्येवात्र मन्यते, नतु चिदचिच्छरीरकब्रह्मतावादेन ॥

"एतद्योनीनि भूतानि सर्वाणीत्यवधारय।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥" (७-६)

इति प्रकृतेर्ब्रह्मण उभयस्य च कारणत्वव्यपदेशोऽप्यत एवोपपद्यते। न त्वत्र द्वितीयषट्के कुत्रापि तादात्म्यप्रयोजकत्वं कार्यकारणभावमतिरिच्य कस्यापि निरूपितम्, येन तादात्म्यव्यपदेशानामन्यनिबन्धनत्वं स्यात्। एतेन—

"मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥" (७-७)

इति गीता—कारणात् सगुणात् परतरं ब्रह्म निर्विशेषमन्यद् यद्यपि वर्तते ; तथापि—न तु तत् ततोऽन्यदिति सगुणस्यापि भक्तियोगविषयस्य प्रपञ्चान्तरसमानयोगक्षेममेव सत्त्वमिति—गमयति। मतान्तरे तु—परतरमन्यदिति पदद्वयं वितथम्। न केवलमियत्, किन्तु सर्वत्र कारणस्य ब्रह्मणोऽनुगमनं सूत्रदृष्टान्तेन निर्दिश्यते। तेन च सर्वत्र कार्येषु सदात्मना स्वरूपचैतन्यस्यैवानुगमः, नतु शरीरिणो निमित्तकारणमात्रस्य वेति प्रतीयते। सर्वं चेदमद्वैताभिमतं सगुणमेव भक्तियोगस्य विषय इति ज्ञापयति। अत्र सूत्र-मणिनिदर्शनेन ब्रह्मणोऽनुवर्तमानत्वम्, तद्व्यतिरिक्तस्य सर्वस्य व्यावर्तमानत्वं च ज्ञाप्यत इति तु केचन। तन्मतदृष्ट्या तु प्रपञ्चासत्यत्वम्, ब्रह्मसत्यत्वं च व्यावर्तमानत्वानुवर्तमानत्वहेतुकमत्र सूच्यत इति त्वन्यदेतत् ॥ एतेन—

"रसोऽहमप्सु कौन्तेय प्रभाऽस्मि शशि-सूर्ययोः।
प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥" (७-८)
"ये चैव सात्त्विका भावा राजसास्तामसाश्च ये।
मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥" (७-१२)

इति श्लोकाः—व्याख्याताः। अत्र "न त्वहं तेषु ते मयि" इत्यंशोऽपि-अयं सर्प इत्यादाविव परस्पराध्यासेऽपि चैतन्यमेवाधिष्ठानं रज्जुरिव, नारोपितमपीति ज्ञापयति। आरोप्यस्वरूप तत्संसर्गयोरुभयोरप्यधिष्ठानेऽध्यासात् ते तु मय्यधिष्ठाने स्वरूपतोऽप्यारोपाद्वर्तन्ते, आरोप्ये त्वधिष्ठानसंसर्गमात्राध्यासाद् नाहं तेष्विति यथाश्रुतं विवरणमद्वैतमते। शरीर-शरीरिभावे तु शरीरे शरीरी वर्तते, नतु शरीरिणि शरीरमिति प्रत्यक्षमिति—"न त्वहं तेषु ते मयी"ति व्याहन्येत। अर्थान्तरकल्पनं तु क्लेशसाध्यं नात्र विस्तरभयाद् विशिष्य समालोच्यते। अत एवान्तर्यामिब्राह्मणम्—"यः पृथिव्यां तिष्ठन्नि"त्यादि ॥

एतेन—नाहं तदायत्तस्थितिक इति विवरणमपि क्लिष्टम्, कार्य-कारणभावव्यवस्थापनप्रसङ्गेऽप्राप्तकालं चेति—व्याख्यातम्। द्वैतमतरीत्या तु "रसोऽहमि"त्यादितादात्म्यव्यपदेशः, एकविज्ञानेन सर्वविज्ञानमुप-

क्रम्य तदुपयोगितया कार्य-कारणभावादिव्यवस्था च कथमपि न सङ्गच्छते। ब्रह्मकार्यत्वं चेदं प्रपञ्चस्य ब्रह्मणोऽज्ञातस्य विवर्तभावेनैव, नतु परिणामिभावेन, तदैश्वर्यविशेषेण वेति निरूपणार्थमेव हि—

"त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत्।
मोहितं नाभिजानाति मामेभ्यः परमव्ययम्॥ (७-१३)
दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते॥" (७-१४)

इति श्लोकौ। अत्र हि—एषा पूर्वोपक्षिप्ता प्रकृतिरेव माया, इति प्रकृतिमुद्दिश्य मायात्वमेव मिथ्यात्वापरपर्यायं बोध्यते, इति तदेकवाक्यतया—"मायां तु प्रकृतिं विद्यादि"त्यत्रापि स एवार्थो विवक्षणीयः, नतु मायामुद्दिश्य प्रकृतित्वविधानम्, इति प्रपञ्चस्य सर्वस्योपादानकारणस्य प्रकृतेरिव प्रपञ्चस्यापि मिथ्यात्वं बोध्यते, इति सगुणब्रह्मणैव न गीताशास्त्रस्य समाप्तिः, न वोपनिषदामिति ज्ञाप्यते। इदं च नाद्वैतमतमन्तरेणान्यत्र सङ्गच्छते, इत्यद्वैताभिमतसगुणोपासनमेवात्र भक्तियोगपदार्थः, न मतान्तराभिमतम्॥

अत एव—

"चतुर्विधा भजन्ते मां जनास्सुकृतिनोऽर्जुन।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ॥" (७-१६)
"तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः॥ (७-७१)
उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम्॥:" (७-७२)

इति ज्ञानिनः परमात्मनाऽत्यन्ताभेदः प्रतिपादित उपपद्यते। तेन च—"आत्मनस्तु कामाय सर्वं प्रियं भवती"त्युपक्रमणेन "आत्मा वा अरे द्रष्टव्य" इत्युपसंहारेण च प्रवर्तमानं सर्वमपि बृहदारण्यकप्रकरणमपि—व्याख्यातं भवति॥

इदमेवात्रालोचनीयम्—ज्ञानस्यात्र भक्तित्वं यदुपन्यस्तम्, किं वस्तुगत्या, उत भक्तिसाध्यत्वाद् भक्त्या वेति। तत्र प्रथमपक्षे भक्तिप्राप्यो हि परमात्मा ज्ञानिन एवात्मा; "आत्मा प्रकरणादि"त्यादिन्यायात्, इति भक्तियोगप्राधान्यवादिनो मन्यन्ते, नतु ज्ञानी जीवः परमात्मन आत्मेति; वैपरीत्यात्, अत एवात्र भगवद्रामानुजादयोऽपि—"ज्ञानी त्वात्मा=तदायत्तधारणोऽहमिति क्लिष्टकल्पनयैव विवृण्वते, यत्तु "न त्वहं तेषु ते मयि" इति वाक्यविवरणावसरे समादृतेन—'नाहं कदाचिदपि तदायत्तस्थितिरि'ति विवरणेन विरुध्यते, इति द्वितीयपक्षानुसारेणैव विवरणं योग्यम्, यत्र ज्ञानिनः परमात्मनश्चात्यन्तमेवाभेदो मन्यते॥

अत एव—

"मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।"(१३-१०)

इति भक्तिरपि ज्ञानसाधनकोटावेव निवेशिता, नतु ज्ञानकोटौ । तेन चैकविज्ञानेन सर्वविज्ञानप्रतिज्ञैवोपसंहृताऽऽत्ममात्रसत्यत्वेनेतरमिथ्यात्वेन च ॥

॥ नवमाध्यायार्थविमर्शः ॥

अत एव नवमाध्यायेऽपि—सप्तमाध्याय इव—

"इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥" (९-१)

इति प्रकारान्तरेणैकविज्ञानेन सर्वविज्ञानं प्रस्तुत्य—अशुभाद् मोक्षश्च तेन बाध्यतैव, नतु नाशो नामेति निरूपयितुम्—

"मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।
मत्स्थानि सर्वभूतानि नचाहं तेष्ववस्थितः ॥ (९-४)
नच मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।
भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥" (९-५)

इति श्लोकौ प्रवृत्तौ । अत्र हि—अव्यक्तमूर्तिना परमात्मना व्याप्तं जगदित्येतावता तद्विवर्तत्वम्, विवर्तत्वं च स्वरूपतो जगतो ब्रह्मण्यध्यासेनैव, परमात्मनस्तु तत्र संसर्गाध्यासमात्रमित्यद्वैतप्रक्रियैव—"न त्वहं तेषु ते मयि"इति सूत्ररूपेणोपक्षिप्तं विस्तरेण निरूप्यते । अत एव 'भूतभृद् नच भूतस्थः' 'मत्स्थानि सर्वभूतानि' 'न चाहं तेष्ववस्थितः' इति सर्वं तेनैकवाक्यतयैवोपपद्यते ॥

इदमेवात्र सन्दिग्धम्—यत्—"ते मयी"ति प्रपञ्चस्य ब्रह्मणि सत्ता किमारोपनिबन्धनैवाद्वैताभिमतरीत्या, उत साक्षात् परम्परया वा परिणामनिबन्धनैवेति । तत्र द्वितीये पक्षे "नच मत्स्थानी"त्यसंलग्नमेव स्यात्, परिणामिकारणे परिणामस्यावस्थाननियमात्, प्रथमे पक्षे सुष्ठु संलगति ; अधिष्ठानसाक्षात्कारेण बाधयोग्यतामदाय तदुपपादनसंभवात् । अत्र तु भगवद्रामानुजादयः—"मत्स्थानि सर्वभूतानि" इति भागं मय्यन्तर्यामिणि स्थितानीति व्याख्याय "नच मत्स्थानी"ति भागं घटादेर्जलादिधारकत्ववद् न मम प्रपञ्च-धारकत्वम्, किन्तु संकल्पमात्रेणेति—व्याचक्षते। इदं तु—प्रथमवाक्य एवान्तर्यामितयैव धारणस्य व्यवस्थापनाद् घटादितुल्यं धारकत्वं न प्रसक्तम्, इत्यप्रसक्तप्रतिषेध आपद्येत, इत्युपक्रमे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया उपपादकम्, इति ब्रह्मेतरमिथ्यात्वमेवात्र तात्पर्यविषय इति वक्तव्यमिति शङ्कर-भगवत्पादाभितमेव सगुणोपासनमत्र भक्तियोगपदार्थ इति मन्तव्यम् ॥

॥ दशमाध्यायार्थविमर्शः

दशमाध्यायोऽपि—

"अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।" (१०-८)

इति परमात्मन एवोपादानकारणत्वं निरूप्य वस्तुगत्या तन्निरस्यति—

"तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥" (१०-११)

इति, इत्यज्ञानदशायामेवोपासनाधिकारः । तेन च ज्ञानसंपत्तौ मोक्ष इति प्रतिपादयन्नपि पूर्वोक्तमेवार्थं निरूपयति ॥

"अहमादिश्च भूतानामन्त एव चे"ति तु सर्वेषां सद्रूपं विना न रूपान्तरमिति प्रतिपाद्यते । यत्तु—

"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥" (१०-४२)

इति, तद्धि नामरूपात्मतैव भूतानां स्वरूपम्, सच्चिदानन्दात्मत्वं तु ब्रह्मण इत्यभिप्रायम्—"पादोऽस्य सर्वा भूतानि त्रिपादस्यामृत दिवी"ति वाक्यार्थमेवानुवदति । तेन च ब्रह्मव्यतिरिक्ताना न सत्त्वम्, न वा ब्रह्मणस्त्रिविधपरिच्छेद इति द्योतनादपि निर्गुणब्रह्मातिरिक्तं सर्वं सगुणब्रह्मपर्यन्त जगद् न पारमार्थिकमिति गम्यते, इति भगवत्पादानामेव सगुणोपासनं द्वितीयषट्कार्थ इति निश्चीयते ॥

॥ एकादशाध्यायार्थविमर्शः ॥

एतेन—एकादशाध्यायोऽपि—व्याख्यातः । सोऽपि हि—

"भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च यत्नेन प्रवेष्टुं च परंतप ॥" (११-५४)

इति हि भक्तेर्न मोक्षसाधनत्वम्, किन्तु तत्साध्यज्ञानस्यैवेति बोधयति, इति विशदमनेनाप्यवगम्यते, यद् भक्तियोगमात्रेण न गीतायाः पर्यवसानम्, किन्तु तत्साध्यज्ञानयोगेनैवेति । भक्तिसाध्यश्च ज्ञानयोगो नाहमर्थशुद्धप्रत्यगात्मज्ञानं विशिष्टाद्वैताद्यभिमतम्, इति ज्ञानयोगोऽपि गीताभिमतोऽद्वैताभिमत एवेत्यवसीयते, यस्य विस्तारोऽनन्तरे व्याख्याने भविता ।

॥ द्वादशाध्यायार्थविमर्शः ॥

द्वादशाध्यायस्तु व्यक्ताव्यक्तोपासनयोर्विशेषप्रश्नेन प्रक्रमते । तत्राव्यक्तोपासनमव्यक्तपदबोध्यायाः श्रिया उपासनम्, व्यक्तोपासनं तु सगुणब्रह्मोपासनमिति द्वैतभाष्यम् । विशिष्टाद्वैतभाष्यम्—व्यक्तोपासनं सगुणोपासनम्, अव्यक्तोपासन तु शुद्धजीवात्मोपासनमिति । अद्वैतभाष्यं तु निर्गुणोपासनमव्यक्तोपासनम्, व्यक्तोपासनं सगुणोपासनमिति । तत्र मतत्रयेऽपि व्यक्तोपासनमेकमेव, अव्यक्तपदार्थविषये परं विप्रतिपत्तिः ।

तत्राव्यक्तोपासनप्रकरणे—

"ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ॥" (१२-३)

इत्यव्यक्तस्याक्षरत्वानिर्देश्यत्वादिकं यन्निर्दिश्यते, तदिदं मायायां श्रीरूपायां न संभवति ; तस्यास्तत्समानसत्ताकनामरूपादिमत्त्वेन निर्देशसंभवात् । अप्रतर्क्यत्वमेवानिर्देश्यत्वमित्यत एव द्वैतभाष्यम्, यदपि बाधितम् ; तस्याः सर्वप्रपञ्चकारणस्य कार्यत एवानुमानसंभवेनाप्रतर्क्यताया बाधात् । अत एव—न प्रत्यगात्माऽपि जीवो विशिष्टाद्वैताभिमतः ; तस्याप्यणुपरिमाणस्य परस्परभिन्नस्य शुद्धस्यापि शास्त्रीयनिर्णयादिनेदमित्थम्भावेन निर्देशाविरोधात् । सर्वगत्व तु तत्र बाधितमेवाणुपरिमाणे, इत्यगत्या निर्विशेषस्वरूपमेवात्राव्यक्तपदार्थः । उपासनं चाव्यक्तस्य साक्षात्कार एव ; पूर्वोक्तरीत्या साक्षात्कार एवोपासनशब्दस्य भक्तियोगप्रशंसाभिप्रायेण प्रयोगात्, इति निर्गुणसाक्षात्कारस्यापि सगुणोपासनप्रशंसार्थतया निर्देशस्तु वर्तत एव । सर्वथा तु 'नहि निन्दा'न्यायेनैव निर्गुणसाक्षात्कारस्य न्यूनता सगुणोपासनापेक्षयाऽत्र विवक्ष्यते, इति 'नहि'निन्दान्यायस्थले निन्द्यमानस्य वस्तुगत्या समादरणीयत्वस्यैव स्वीकाराद् ज्ञानयोगतात्पर्ये गीतायां द्वादशोऽध्यायोऽप्यनुगुण एव । यतो निर्गुणसाक्षात्कारमपि सिद्धवत्कृत्यैव सगुणोपासनमत्र स्तूयते । तच्चोपास्यमानस्य सगुणस्य त्रिकालाबाध्यतायां विरुध्यत इति भक्तियोगोऽपि गीताऽभिमतोऽद्वैतसंमत एवेति स्वीकर्तव्यम्, इति सामान्यतः सप्तमाध्यायमारभ्य द्वादशाध्यायपर्यन्तं गीतार्थसमालोचनमद्वैतिनां भक्तियोगमेव परिपोषयति, यस्तु क्वचनाभ्युदयार्थः, क्वचन कर्मसमृद्ध्यर्थः, क्वचन ज्ञानयोगद्वारा क्रममुक्त्यर्थः, नतु साक्षादेव मुक्तिसाधनम् ॥

अत एवानुगीतायां गीतातात्पर्यनिष्कर्षप्रसङ्गेऽपि कर्मयोगस्येव न लेशतोऽपि तस्य परामर्शः । द्वादशाध्यायोऽप्यत्यन्ताशक्तस्य कर्मयोगाधिकारम्, ततोऽपि शक्तस्य भक्तियोगाधिकारम्, ततोऽपि शक्तस्य ज्ञानयोगाधिकारं हृदये निधायैव—

"श्रेयो हि ज्ञानमभ्यासाद् ज्ञानाद् ध्यानं विशिष्यते ।
ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥" (१२-१२)

इति वदति, नतु वस्तुगत्या । अन्यथा कर्मयोगस्याक्लेशसाध्यस्य भक्तियोगापेक्षयाऽप्युत्कर्षः स्यात्, यदि व्यक्तोपासनस्याक्लेशसाध्यस्यैव क्लेशसाध्याव्यक्तोपासनापेक्षयोत्कर्षे तात्पर्यं स्यादिति सूक्ष्मदृष्ट्या द्वादशाध्यायविमर्शनमप्यद्वैतमतमेव द्वितीयषट्कार्थमवसाययति ॥

॥ द्वितीयषट्कस्य साङ्ख्यादिदर्शनेषु न स्थानम् ॥

अथ द्वितीयषट्कं न साङ्ख्यादिप्रक्रियामनुवदतीति निरूपणमवसरप्राप्तम् । तत्र हि—भगवन्माहात्म्यमेव वर्ण्यत इति भगवद्रामानुजाः । तत्र तु न साङ्ख्य-योगयोः स्थानलेशोऽपि ; भगवत एव तैरनङ्गीकारात् । अत एव न मीमांसकदर्शनमप्यवसरति ॥

"भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ (७-४)
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥" (७-५)

इति हि न विशिष्टाद्वैताभिमतचिदचिच्छरीरकत्वं प्रतिपादयति ; प्रकृतेः परापरविभागानुपपत्तेः । अत एव—"ययेदं धार्यते जगदि"ति सकलजगद्धारकत्वोक्तिरपि—व्याख्याता ; अद्वैतमतातिरिक्तेषु कुत्रापि जीवभूतभगवत्स्वभावस्य, परत्वस्य, जगदाधारत्वस्य वाऽसंभवात् । भगवद्रामानुजास्तु —भोग्यत्व-भोक्तृत्व-निबन्धनमपरत्वम्, परत्वं च मन्यन्ते । इदं तु परमात्मदृष्ट्या शरीरत्वेन जीवस्याप्यप्राधान्याविशेषान्नोपपद्यते । अत एव न पाञ्चरात्रस्याप्यत्रावकाशः । द्वैतमते तु—जडप्रकृतिः, अजडप्रकृतिः=श्रीश्चात्र विवक्ष्यत इति मन्यते । इदं तु तदभिमतपाञ्चरात्रसिद्धान्तविरुद्धमेव । सर्वत्र तु जगद्धारकत्वं परमात्मन एव तत्र तत्र श्रूयमाण विरुध्यत एव । इदं च शैवविशिष्टाद्वैतमतस्यापि साधारणमेव विमर्शनम् ॥

"एतद्योनीनि भूतानि सर्वाणीत्यवधारय ।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥" (७-६)

इति प्रकृतिकार्यत्वम् , परमात्मकार्यत्वमुभयं च गीतायां प्रतिपादितमद्वैतमत एव स्वरसम्, न मतान्तरे । तत्र विशिष्टाद्वैतमते ब्रह्मणो न प्रभवत्वादिकं साक्षात्, द्वैतमते तु तस्य निमित्तकारणमात्रस्य परम्परयाऽपि लयाद्यवस्थाऽनुपपन्नेति सर्वविदितम्, इत्यर्थान्तरकल्पनादोषो मतान्तरेऽपरिहरणीय एव ॥

॥ गीतायामद्वैतिनामेव मायावादः ॥

एतेन—"रसोऽहमप्सु" इति तादात्म्योपदेशोऽपि मुख्योऽद्वैत एवेति—व्याख्यातम् । अत एव "न त्वहं तेषु ते मयि" इति कार्यमिथ्यात्वादिप्रतिपादनम् । मायापदार्थो हि—

'दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥" (७-१४)

"माययाऽपहृतज्ञानाः" इत्यादावद्वैताभिमत एव स्वरसः, यत्रावरणशक्तिरप्यस्या अनेनावगम्यते । मायातरणं च जीवानां मुक्त्यवस्थायामद्वैतमत एव । तत्र मायात्वमस्या विचित्रसृष्टिकरत्वेन नाद्वैतिनामपि विरुद्धम् । "माययाऽपहृते"त्यत्र मायाशब्दः कूटयुक्तिपर इति तु न स्वरसम् । द्वैतमते तु दैवीति ममेति च पुनरुक्तम् , श्री-भू दुर्गादिरूपत्वं च वैष्णवत्वविरोधि ; दुर्गाया वैष्णवत्वासंभवात् । मुक्तौ तु श्रियोऽप्यतिक्रमणं कथमपि न संभवति, इति सगुणमपि ब्रह्म सप्तमाध्यायप्रतिपादितमद्वैतानुगुणमेव ॥

एतेन—अष्टमोऽध्यायोऽपि—व्याख्यातः ; अक्षरस्यैव परब्रह्मत्ववर्णनेन वस्तुतो निर्विशेषब्रह्मवादस्यैवात्र विवक्षितत्वात् । द्वादशाध्याये—

"एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥" (१२-१)

इति हि सविशेषव्यतिरिक्तमेवाक्षरमत्र विवक्ष्यते । अत्र हि अक्षरशब्देन प्रत्यगात्मस्वरूपं विवक्ष्यत इति भगवद्रामानुजाः । इदं तु "अक्षरं ब्रह्म परममि"ति वाक्यविरुद्धम्, तदीयज्ञानयोगार्थस्य प्रत्यगात्मनो ग्रहणायोग्यता चात्र । तथा च परविद्यैकवाक्यतयाऽक्षरपदार्थव्यवस्थाऽद्वैतमत एव ॥

"यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण प्रवक्ष्ये ॥" (१२-१२)

इति श्लोकोऽप्यत एव व्याख्यातः । अयं हि श्लोकः "सर्वे वेदा यत्पदमामनन्ती"ति कठवल्ली वाक्यसमानाकार इति तेनैकवाक्यताऽवश्यमेवात्र स्वीकर्तव्या ॥

सति चैवं वचनद्वयैकार्थता परमात्मभिन्नप्रत्यगात्मपरत्वेन विशिष्टाद्वैतमतरीत्या व्याख्येया, अथवा तदभिन्नस्वरूपचैतन्यमात्राभिप्रायतया । श्रीभाष्याद्यनुयायिनस्तु गीतायां परमात्मपरत्वम्, कठवल्ल्या प्रत्यगात्मपरत्वं च मन्यन्ते । इदं तु विरुद्धमित्यद्वैतमतानुसारी मार्ग एव शरणीकर्तव्यः, इति वस्तुतो निर्विशेषभगवत्स्वरूपवर्णन एवात्र तात्पर्यमङ्गीकर्तव्यम् ॥

एतेन—द्वैतमतमपि—व्याख्यातम् । तत्रापि हि—द्वादशाध्यायोपक्रमेऽक्षरशब्देनाव्यक्तस्य श्रीरूपस्य ग्रहणम्, 'यदक्षरमि'त्यादौ तु गीतायां परमात्मपरत्वम्, कठवल्ल्या प्रत्यगात्मपरत्वमित्येव स्वीक्रियते । नवमाध्याये "मत्स्थानि सर्वभूतानि" "न च मत्स्थानि" इत्यादिविरोधपरिहारो यथाश्रुतरीत्याऽद्वैतमत एव निर्वहति ॥

दशमाध्याये भगवतो वासुदेवस्यापि सगुणस्य ब्रह्मणो विभूतित्वनिर्देशो हि निर्गुणवादपर्यवसानं गमयति । अत एवैकादशाध्याये "कालोऽस्मि लोकक्षयकृत्प्रवृद्धः" इत्यादिना भगवद्वासुदेवातिरिक्त सर्वप्रलयरूप निर्विशेषचैतन्यरूपमेव मुख्य तत्त्वमिति प्रतिपाद्यते, इति सविशेष निर्विशेषभेदब्रह्मद्वैविध्यप्रक्रियामादायैव भगवद्गीता ॥

अत एव द्वादशाध्यायोपक्रमे —

"एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥" (१२-१)

इति प्रश्नोऽप्युपपद्यते । व्यक्त चैतदानन्दमयाधिकरणोपक्रमे भाष्येऽपि ॥

सविशेषस्यापि ब्रह्मणो महेश्वरत्वे संभाव्यमानं प्रमाणं तु द्वितीयषट्के नास्ति, किन्त्वष्टादशाध्याये तृतीयषट्क एव । तस्य च ज्ञानयोगपरस्य शिव-विष्ण्वादिभेदशून्याद्वितीयतत्त्वप्रतिपादनपरस्य तत्रान-भिप्रायः । अतो न पाशुपतेऽपि गीतातात्पर्यम् । जीवोत्पत्तिवादस्तु नात्र वर्तते । जीवस्यापि प्रकृतित्व-

निर्देशपूर्वकम् "एतद्योनीनि भूतानी"ति कार्यकोटितो व्यावर्तनात् । भक्तियोगः, तत्फलञ्च जगद्व्यापारवर्ज ब्रह्मस्वभावः, इति द्वितीयषट्कस्याप्यद्वैत एव पर्यवसानं प्रतीयते ॥

मीमांसादर्शनस्य तु नात्र प्रसङ्गलेशोऽपि । अत्यन्ताशक्तविषयत्वं तु कर्मयोगस्य भक्तियोगसाधनत्वेन हि निर्दिश्यते, न तूत्कर्षाभिप्रायेण ।

---

# ॥ भगवद्गीतातृतीयषट्कम् अद्वैतदर्शनं च ॥

## ॥ नवमं व्याख्यानम् ॥

॥ "क्षेत्रज्ञं चापी"ति सामानाधिकरण्योपपत्तिचर्चा ॥

त्रयोदशाध्यायमारभ्याष्टादशाध्यायान्तं तृतीयषट्कं ज्ञानयोगपरमिति सर्वसंमतम्, सप्रपञ्चस्य ज्ञानयोगस्यैवात्र व्यवस्थापनात् । तथाहि—त्रयोदशाध्यायो हि—

"क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।
क्षेत्र-क्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥" (१३-३)

इति क्षेत्रज्ञाभेदं परमात्मनो वदतीति सर्वसंप्रतिपन्नम् । क्षेत्रज्ञपदार्थश्च जीव एवेत्यपि विशिष्टाद्वैताद्वैतयोरविप्रतिपन्नम्, द्वैतमते तु सोऽपीश्वर एवेति परं विशेषः । तत्र "क्षेत्र क्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं ममे"ति क्षेत्रज्ञज्ञानात् पृथक् क्षेत्रज्ञानाभावनिर्देशेन क्षेत्रज्ञानस्यापि परमात्मज्ञानत्वोक्तिः कस्मिन्मते कथमुपयुज्यत इति समालोचनीयम् । तत्र द्वैतमते ईश्वरस्य क्षेत्रज्ञपदवाच्यस्याव्यक्तादेश्चात्यन्तभेदात् क्षेत्रज्ञानं न परमात्मज्ञानतामर्हति । विशिष्टाद्वैतमते तु क्षेत्रपदेन परिदृश्यमानजीवशरीरस्य ग्रहणे तस्य ज्ञानं न परमात्मनो ज्ञानम्; साक्षादेतच्छरीरेण परमात्मनः शरीरिभावाभावेन तयोरभेदस्य शरीर-शरीरिभावनिबन्धनस्याप्यसंभवात् ।

एतेन—"क्षेत्रज्ञं चापि मां विद्धि" इत्यत्र चपदेन क्षेत्रमपि समुच्चीयत इति योजनमपि चिन्त्यमिति—सूचितम् । वस्तुतस्तु शरीर-शरीरिभावनिबन्धनस्यैवाभेदस्यात्र विवक्षणे परमात्मनो ज्ञानेनैव क्षेत्र क्षेत्रज्ञयोर्ज्ञानम्, नतु क्षेत्र क्षेत्रज्ञयोर्ज्ञानेन परमात्मनो ज्ञानम्; शरीरिज्ञानेन शरीरज्ञानवत् शरीरज्ञानमात्रेण शरीरिज्ञानासंभवात् । अन्यथा संसारदशायामपि सर्वेषां शरीराणामहमर्थादीनामपि तेन रूपेण ज्ञातेन परमात्मज्ञानमापद्येत । 'परमार्थतस्तु श्रीभाष्यमते क्षेत्रज्ञस्य जीवस्यापि क्षेत्रत्वात् 'क्षेत्रं चापि मां विद्धि'इत्येवावतरणं युक्तम्, नतु पृथक् 'क्षेत्रज्ञं चापी'ति; भगवद्दृष्ट्या जीवस्य क्षेत्रज्ञत्वाभावात् ।

अतोऽद्वैतिनां विवरणमेवात्र योग्यम्, यत्र क्षेत्रस्य व्यष्टिशरीरस्य "भूमिरापोऽनलो वायुरि"त्यादिना वर्णयिष्यमाणसमष्टिशरीरस्य च सर्वस्य जडप्रपञ्चस्य, तथाऽन्तःकरणाद्युपहितजीवस्य च पृथगभेदनिर्देश आवश्यकः, एकस्य कार्यत्वात्, अपरस्य स्वरूपतोऽकार्यत्वादित्यतो जडवर्गेण सामानाधिकरण्यं बाधायाम्, जीवेन सामानाधिकरण्यमभेदे, इति द्विविधं सामानाधिकरण्यं विवक्ष्यते। तत्र हि क्षेत्राणां ब्रह्मविवर्तानां ब्रह्मरूपत्वम्, क्षेत्ररूपत्वमिति रूपद्वये क्षेत्ररूपेण तेषां तैर्ब्रह्मणश्च भेदेऽपि कारणब्रह्मरूपेण क्षेत्राणां परस्परं तैर्ब्रह्मणश्चाभेद एव मन्यते; "कार्यात्मना तु नानात्वमभेदः कारणात्मने"ति न्यायात्॥

॥ 'क्षेत्रज्ञमि'त्येकवचनोपपत्तिचर्चा ॥

अतश्च क्षेत्ररूपेण क्षेत्राणां भेदमादाय "सर्वक्षेत्रेषु" इति बहुवचनम्; ततो विविक्तसंविद्रूपेण जीवस्यैकत्वात् क्षेत्रज्ञमित्येकवचनं च। मतान्तरे जीवभेदस्य पारमार्थिकस्य स्वीकारात् "क्षेत्रज्ञमि"त्येकवचनमपि नोपपद्यते। एतेन—'क्षेत्र क्षेत्रज्ञयोरि'त्यत्र क्षेत्रस्याप्येकत्वनिर्देशोऽपि कारणात्मनाऽभेदमादायैवेति—व्याख्यातम्। सति चैवम्—जीव-ब्रह्मणोरभेदज्ञानं संविन्मात्रेण जीव-ब्रह्माभेदानुभव एव, येन सर्वेषां जडप्रपञ्चानां बाधो भवति, बद्धस्य च जीवस्योपाधिनाशेनोपहितरूपेण बाधः। तदेव तु ज्ञानं सम्यग् ज्ञानम्, नतु प्रमात्रादिज्ञानम्, घटादिज्ञानं वा, इत्येकविज्ञानेन सर्वविज्ञानमेवानेन श्लोकेन व्यवस्थाप्यते। अयमत्र निष्कर्षः—"क्षेत्रज्ञं चापि मां विद्धी"ति सामानाधिकरण्यनिर्देशाज्जीवेश्वरयोरेकत्वं संविद्रूपेणावगम्यते। ततश्च संविन्मात्रस्यैवोपाधिवशादीश्वरत्वम्, जीवत्वं चारोपितमित्यवगमात् तयोस्तद्भावनिवृत्तिरेवात्र वाक्यार्थः; अनेन चाप्ततमभगवदुपदेशेन "रज्जुरियं नायं सर्पः" इत्याप्तोपदेशेन सर्पत्वभ्रमनिवृत्तिवत् क्षेत्रज्ञत्वादिभ्रमो निवर्तते; उपाधीनां सर्वेषामपि क्षेत्राणां बाधात्॥

॥ अद्वैतमते भगवत उपदेशकत्वाविरोधः ॥

भगवद्रामानुजाचार्यास्तु—एवमद्वैतसिद्धान्तस्यैवात्र विवक्षणे भगवतो वासुदेवस्य निवृत्ताज्ञानत्वे निर्विशेषसंविन्मात्रैकस्वरूप आत्मन्यतद्रूपाध्यासासंभावनया कौन्तेयादिभेददर्शनम्, तान् प्रत्युपदेशश्च नोपपद्येत। अनिवृत्ताज्ञानत्वे तु तस्याप्यज्ञत्वादुपदेशादिव्यवहार एव भज्येत; अतत्त्वज्ञानित्वात्। अत एव गीता—"उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः" इति,इत्यद्वैतमतमिदं "न त्वेवाहमि"ति कर्मयोगोपक्रमोक्तदिशैव दूषयन्ति। अद्वैतिनस्तु—आधिकारिकपुरुषत्वाद्वासुदेवस्य तत्त्वज्ञानिनोऽपि यावदधिकारमुपदेशकत्वादि न विरुद्धमिति मन्यन्ते—"यावदधिकारमवस्थितिराधिकारिकाणामि"ति न्यायादिति नोपदेशाद्यनुपपत्तिः, इति सत्यपि भेदज्ञानबाधे स्वेच्छावशादुपदेशस्तु न विरुध्यते। अद्वैतिनो हि भगवतो वासुदेवस्य, तन्मूलपुरुषस्य नारायणस्य वा कारणस्य चिन्मात्रत्वं नोरीकुर्वन्ति, किन्तु विशिष्टाद्वैतादिदर्शन इव सगुणत्वमेव स्वस्वरूपेण, इति तस्य स्वाधीनस्वोपाधिमायाकल्पितभेददर्शनादिकं कार्यं न विरुध्यते? ईश्वरो हि कारणस्वरूपो मायाव्येव,

नाज्ञानी, इति न तत्राज्ञानस्य प्रसङ्गलेशोऽपि,इति समानमेवोत्तरं मतान्तरेण। सर्वथा तु "क्षेत्रज्ञं चापि मां विद्धि"इति श्लोको भगवत्पादमत एव सुष्ठु लगति, न विशिष्टाद्वैतादिमते। तथाच द्वैतमते—क्षेत्रपदेन भगवन्निवासस्थानस्यैव विवक्षणेन क्षेत्र-क्षेत्रज्ञोभयज्ञानं भगवतो ज्ञानमिति मन्यते, तत्र च केवलब्रह्मज्ञानस्य मोक्षसाधनत्वम्—"अथातो ब्रह्मजिज्ञासे"ति ब्रह्ममात्रजिज्ञासा वा नोपपद्यते, इति "क्षेत्रज्ञं चापि मां विद्धी"ति श्लोकोऽद्वैतानुगुणतामेव भगवद्गीताया गमयति॥

॥ ज्ञेयक्षेत्रज्ञस्वरूपादिकमद्वैतानुगुणमेव ॥

अत्र क्षेत्र क्षेत्रज्ञ परमात्मनां त्रयाणां प्रकरणेऽपि क्षेत्रज्ञ-कारणमात्रयोः—

"तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत्।
स च यो यत्प्रभावश्च तत्समासेन मे शृणु॥" (१३-३)

इति श्लोके जिज्ञासाप्रतिज्ञापि हि क्षेत्र-क्षेत्रज्ञयोरेव तत्त्वत्वम्, इति क्षेत्र-तद्विविक्तक्षेत्रज्ञस्वरूपज्ञानेनैव पर्याप्तमिति सूचयति। समष्टि व्यष्टिभ्यां क्षेत्रज्ञानेन तदुपहितजीवेश्वरयोरपि ज्ञानमर्थसिद्धं भवतीति ह्यद्वैतिनां मर्यादा। तेन चोपाधिकृत एव प्रभवः समष्टि-व्यष्टिरूपक्षेत्रज्ञस्य, स्वरूपतस्तु संविन्मात्रमेव तत्स्वरूपमिति फलति। अन्येष्वपि मतेषु क्षेत्र क्षेत्रज्ञमाहात्म्यमेवात्र यद्यपि जिज्ञास्यतया प्रतिज्ञायते; तथापि न तयोर्जिज्ञासामात्रं कार्यकारि तन्मतेषु ब्रह्मजिज्ञासां विना, इति मुख्यं प्रयोजनमेतज्जिज्ञासायास्तत्र न संभवति, न वा—

"ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक्।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः॥" (१३-४)

इति ब्रह्मसूत्रादितात्पर्यविषयत्वोपपादनमुपपद्यते। अनेन हि पञ्चविंशतितत्त्ववाद एव गीतार्थ इति मन्यते, स चाद्वैतवादे, साङ्ख्यवादे च भवति, नान्यत्र। इयान् विशेषः—यत् साङ्ख्यमत इव न प्रत्यगात्मनो बहुत्वमद्वैतमते, किन्तु तदेकत्वमेव, नवा तन्मत इव सर्वप्रपञ्चकारणेश्वराभावोऽद्वैतमते, तत्रेश्वराङ्गीकारात्। अत्र तु "क्षेत्रज्ञं चापि मां विद्धि" इति क्षेत्रज्ञैकत्वं तस्येश्वराभेदोपपादनेनेश्वराङ्गीकारश्च विशदः, इति साङ्ख्यमते तात्पर्याभावे परिशेषादद्वैत एव तात्पर्यं निरूढं भवति। सति चैवं—

"महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः॥"

इति चतुर्विंशतितत्त्वानाम्, "इच्छा द्वेषः सुख"मित्यादिना क्षेत्रधर्माणाम्, क्षेत्रज्ञज्ञानसाधनादीनाममानित्वादीनां मुमुक्षान्तानां च निरूपणानन्तरम्—"ज्ञेयं यत्तत्प्रवक्ष्यामी"ति क्षेत्रज्ञस्वरूपं यदुपवर्ण्यते, तस्य—"अनादिमत् परं ब्रह्मे"ति परब्रह्मत्वम् "न सत्तन्नासदुच्यते" इतीतरनिषेधमुखेनैवोपदेश्यत्वादिकं च यदुपन्यस्तम्, तदिदमद्वैतमततात्पर्य एव स्वरसम्, विशिष्टाद्वैतमते तु ब्रह्मपदमात्मनि लाक्षणिकमिति

स्वीकर्तव्यम्, एवं "सर्वमावृत्य तिष्ठती"त्यादिकं च सर्वगतत्वपरं नोपपद्यते। अत एव—"ज्योतिषामपि यज्ज्योति"रित्युपपद्यते। न हि जीवात्माऽणुपरिमाणस्तन्मतसिद्धो व्यापकः, ज्योतिषामपि वा ज्योतिः; धर्मभूतज्ञानद्वारा सर्वभासकस्य तस्य ज्योतिषामपि ज्योतिष्ट्वस्यासंभवात्। यत्तु—"ज्ञानं ज्ञेयं ज्ञानगम्यमि"ति ज्ञेयत्वातिरेकेण ज्ञानगम्यत्वमुक्तम्, तदिदं वृत्तिव्याप्यस्य ब्रह्मण एव फलत्वसिद्ध्यर्थं नोपासनादिक्रियापेक्षेति बोधनार्थमित्यद्वैतमतम्, विशिष्टाद्वैतमते तु—ज्ञानगम्यमित्यनेन ज्ञानसाधनगम्यमिति विवक्ष्यते, इति ब्रह्मज्ञानपदे तत्साधनलक्षणादोषः, अमानित्वादीनां ब्रह्मज्ञानसाधनत्वस्य पूर्वमेवोपपादनादत्राप्राप्तकालता च। सर्वथा तु—

"इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः।
मद्भक्त एतद्विज्ञाय मद्भावायोपकल्पते ॥" (१३-१८)

इति क्षेत्रज्ञज्ञानस्य भक्तिसाध्यत्वम्, तस्य ब्रह्मभावहेतुत्वं च प्रतिपादितं नान्यत्र मत उपपद्यते ॥

अयमत्र निष्कर्षः—सप्तमाध्याये परापरप्रकृतियोनित्वं प्रपञ्चस्य निरूपितम्, तत्र परप्रकृतिश्च क्षेत्रज्ञ इति निरूपितम्, अत्र तु क्षेत्रज्ञस्य निर्विशेषब्रह्मरूपतोच्यत इति विरोधस्तु नाद्वैतमते भवति; समष्टि व्यष्टि-क्षेत्रकार्याभिप्रायत्वात्तस्य। तथाच प्राप्ताप्राप्तविवेकन्यायेन क्षेत्रज्ञस्यैव प्रकृतित्वम्, संविन्मात्रं तु पुरुषपदवाच्यं न कारणम्, न वा कार्यम्; उपाधिमात्रकार्यत्वेन जीवस्यापि कार्यत्वव्यवहारात्। व्यक्तं चैतत्—

"न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥" (२ १६)

इत्यादौ ॥

॥ प्रकृत्यनादित्व-सान्तत्वयोरद्वैतमतानुगुण्यम् ॥

तदिदमभिप्रेत्याह—

"प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥" (१३-२०)

इति। अन्यत्र तु प्रकृति-पुरुषयोरुभयोरपि मुख्यं प्रकृतित्वम्, विकाराणां च तत्प्रभवत्वं स्वीक्रियते, इति श्लोकोऽयमनुपपन्नः स्यात्। अतः क्लिष्टं योजनान्तरमेव कर्तव्यं समापतति। तत्र प्रकृतेरनादित्वेऽपि नाशस्वीकारो यदि गीतायां वर्तते, तदैवाद्वैतमतस्यावकाशः, नान्यथेति तस्या अप्यनित्यत्वबोधनार्थम्—"भूतप्रकृतिमोक्षं चे"ति त्रयोदशाध्यायोपसंहारे वर्तते। अत्र भगवत्पादानां भाष्यम्—भूतानां प्रकृतिरविद्या, तस्या मोक्षणमभावत्वगमनमिति, तदनुयायिनां शङ्करानन्दानां तु—भूतानां प्रकृतेश्च मोक्ष इति विवरणम्। तत्र भूतानां साक्षाद् न ज्ञाननाश्यत्वम्, किन्तु प्रकृतिनाशद्वारैवेत्येवाद्वैतसिद्धान्ताद् न फलतो विशेषः। तथापि प्रथमे विवरणे भूतपदप्रयोजनं तु भूतानामेव प्रकृतिकार्यत्वं क्षेत्रपदबोध्यानाम्, नतु जीवस्येति बोधनमेव। मतान्तरयोस्तु 'भूतानां प्रकृतिमोक्षम्' इति विवरणं यत्र मन्यते, तत्र भूतपदस्य चेतनपरताया विवक्षणा-

लक्षणादोषादिकम्, इति प्रकृतिविविक्त स्वरूपचैतन्यमेव पारमार्थिकं त्रयोदशाध्यायप्रतिपाद्यमवगम्यते, इति भगवत्पादाभिमतो ज्ञानयोग एव तृतीयषट्कमुख्यार्थः ॥

॥ त्रयोदशाध्यायस्वारस्यमद्वैताभिमतज्ञानयोग एव ॥

अत एव ज्ञेयं क्षेत्रज्ञमधिकृत्य—

"उपद्रष्टाऽनुमन्ता च भर्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ॥" (१३-२३)

इतीश्वराभेदो निरूप्यते । मतान्तरे तु नैतत्स्वरसम् । यत्तु—

"कार्य कारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुख दुःखानां भोक्तृत्वे हेतुरुच्यते ॥" (१३-२१)

इति वचनम्, तेन प्रकृति-पुरुषाविवेकदशायामुभयनिष्ठतया कार्याकारपरिणामित्वस्य, भोक्तृत्वस्य च प्रतीतावपि वस्तुगत्या नोभयनित्यत्वम्, किन्तु प्रकृत्यंशस्य परिणामित्वम्, पुरुषांशस्य तु चिद्रूपस्य चिच्छक्तिरूपभोक्तृत्वमिति व्यवस्थापरं यद्यपि साङ्ख्यमतसाधारणम्, तथापि नात्र साङ्ख्यदर्शनस्य सर्वात्मना सङ्गतिरिति पूर्वमेवोक्तमिति न विरुध्यते । मतान्तरे तु नैवं विवेको विवक्ष्यते । अत एव भगवद्रामानुजभाष्यम्—"पुरुषाधिष्ठिता प्रकृतिरेव शरीरेन्द्रियाणां विकारित्वे हेतुः, प्रकृतिसंसृष्टश्च पुरुषो भोक्तृत्वे हेतुरिति । तदेवं त्रयोदशाध्यायस्याद्वैतमतानुगुण्यमेवेति व्यवस्थापितम् । अत एव—

"अनादित्वान्निर्गुणत्वात् परमात्माऽयमव्ययः ।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥" (१३-३२)

इति भगवद्गीता ॥

॥ चतुर्दशाध्यायार्थज्ञानयोगफलमुक्तिस्वरूपस्याद्वैतानुगुण्यम् ॥

एतेन—चतुर्दशाध्यायोऽपि—व्याख्यातः । तत्र हि—

"इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥" (१४-१)

इतीश्वरसाधर्म्यं ज्ञानफलं प्रतिपाद्यते । इदं च साधर्म्यं "निरञ्जनः परमं साम्यमुपैती"ति वचनसिद्धं यदि परमसाम्यम्, तर्हि त्वनेकजीववादे यावत्सर्वमुक्तीश्वरभाव एव जगद्व्यापारेण साकमपीति भगवत्पादानां सिद्धान्त एव पर्यवसानम्, यतो निर्गुणब्रह्मभावो नानेकजीववादे यावत्सर्वमुक्ति संभवति । अत्र च [ श्लोकेऽनेकजीववाद एव विवक्षितः; "साधर्म्यमागताः"इति बहुवचनप्रयोगात् । साधर्म्यमात्रविवक्षायां तु

तस्य धीफलत्वाभावाद् भक्तिफलत्वात्, मुख्यफलस्यावाङ्मनसगोचरत्वाच्च तेनैव फलेन मुख्यफलोपलक्षणमेव विवक्ष्यत इति वक्तव्यम्। अत एव स्रष्टृत्वादिना कारणरूपेणैवोपरि—

"मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम्।
संभवः सर्वभूतानां ततो भवति भारत ॥" (१४-३)

इति ब्रह्मणो निरूपणम्, इति त्रयोदशाध्याये क्षेत्रमुखेन त्वपदलक्ष्यार्थविधया ब्रह्मोपस्थापनम्, अत्र तु तत्पदार्थविधया तत्। तथाच ज्ञेयस्य तत्पदलक्ष्यार्थस्य वाच्यविधयोपस्थापनपूर्वकं तदुपासनफलमेव तटस्थलक्षणविधया मुख्यफलोपस्थापकमपीति विवक्षितम्। अत एव—उपरि सर्वेषां विकाराणां सत्त्वादिगुणविकारत्वमुपवर्ण्य—

"नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति।
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥" (१४-१९)

इति प्रकृतिविविक्तमेव परमात्मानं तत्पदलक्ष्यार्थं संविन्मात्ररूपम्, यस्य ज्ञानेनैव ब्रह्मभावः, उपस्थापयति। मद्भावश्चायं गुणात्यय एवेति हि—"स गुणान् समतीत्यैतानि"त्यादिना प्रतिपाद्यमानोऽपि परमात्मन इव स्ववशप्रकृतिकत्वं प्रकृतिपरवशत्वाभावरूपमेवाऽवगम्यते। तेन च वस्तुगत्याऽतीतमायत्वमेव पर्यवस्यति। तच्च यदि सप्तमाध्यायोक्तरीत्या मायातरणरूपम्, तर्हि तच्छरीरताया विरुद्धम्, इति तेनाप्यद्वैताभिमतमुक्तिस्वरूपमेव प्रतिपाद्यम्। यतो गुणात्ययमात्रं मुक्ति, न तूत्क्रान्त्यपेक्षा सेति फलति। स्पष्टं चानुगीतायाम्—

"इह लोकस्थ एवायं ब्रह्मभूयाय कल्पते ॥"

इति विनोत्क्रमणं मुक्तिस्वरूपं यदुपस्थापितम्, तदेव—"गुणान् समतीत्य" इत्यनेनाप्यनूद्यते। तेन च जन्मादिमुक्तिमात्रमेवात्र मुक्तत्वम्, इति "विमुक्तश्च विमुच्यते" इति श्रुत्यर्थ एवात्र संगृह्यते। एतेन—

"मां च योऽव्यभिचारेण भक्तियोगेन सेवते।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥" (१४-२६)

इति श्लोकोऽपि—व्याख्यातः। अतोऽव्यभिचारभक्तियोगशब्देन ज्ञानयोग एव विवक्ष्यते, नतु भक्तियोगमात्रम्; त्रयोदशाध्याये—"मयि चानन्ययोगेन भक्तिरव्यभिचारिणी"ति ज्ञानयोगसाधनत्वेनैव तस्योपदेशात्। सर्वथा तु चतुर्दशाध्यायोऽप्यद्वैतानुगुण एव। अत एव—

"ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च ॥" (१४-२७)

इति ब्रह्मणोऽनहमर्थस्य च प्रत्यगात्मन एकत्वं प्रतिपाद्यते। अत्र हि ब्रह्मशब्देन सगुणस्य तत्पदवाच्यस्य ग्रहणम्, अहंपदेन च स्वरूपचैतन्यमात्रस्य, इति तत्पदलक्ष्यार्थेनोपसंहारोऽपि—व्याख्यातः। तदेव चतुर्दशाध्यायार्थविमर्शः ॥

॥ पञ्चदशाध्यायस्य वेदान्तदर्शने स्वारस्यम् ॥

पञ्चदशाध्यायस्तु—सकारणं संसारम्—"उर्ध्वमूलमधःशाखम्" (१५-१) इत्यादिना प्रतिपाद्य—क्षराक्षरातीतं पुरुषोत्तमतया निर्विशेषं ब्रह्म प्रतिपादयन्नद्वैतमेव पोषयति। अन्यथा—

"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते॥ (१५-१६)
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः॥" (१५-१७)

इति क्षराक्षरातीतं पुरुषं पुरुषोत्तमाख्यं निरूप्य भगवतोऽपि क्षराक्षरातीतत्वेन पुरुषोत्तमत्ववर्णनं व्यर्थमेवापद्येत। अत्र हि प्रथमतः पुरुषोत्तमोऽन्यः, स चेश्वर इति बद्ध-मुक्तजीवभिन्नत्वं स्वस्मादपि भिन्नस्यैव निरूप्य स्वस्याप्याधिकारिकपुरुषस्य क्षराक्षरातीतत्वेनैव पुरुषोत्तमत्वम्, न स्वत इति निरूप्यमाणं निरुपाधिकरूपमेव पुरुषोत्तमस्वरूपं गमयति। तच्चाद्वैतमत एवोपपद्यते। अत एव—

"यो मामेवमसम्मूढो जानाति पुरुषोत्तमम्।
स सर्वविद्भजति मां सर्वभावेन भारत॥" (१५-१९)

इति संविन्मात्ररूपेण ब्रह्मविज्ञानेन सर्वात्मना ब्रह्मभावः प्रतिपाद्यते। विशिष्टाद्वैतादिमते तु—

"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते॥" (१५-१६)
"यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥" (१५-१८)

इत्यनेनैव निर्वाहे—'उत्तमः पुरुषस्त्वन्यः' इत्यन्यस्य पुरुषोत्तमत्ववर्णनं वितथमेव। एवमेव द्वैतमतेऽपि। अद्वैतमते तु नैवम्। तत्राक्षरोऽव्यक्तमेव द्वैतमते, विशिष्टाद्वैतमते तु मुक्तो जीव इति त्वन्यदेतत्। सर्वथा तु पञ्चदशाध्यायोऽप्यद्वैतमतानुगुण एवेति तु निष्कर्षः॥

॥ षोडशाध्यायस्याद्वैतवादनिन्दायां तात्पर्यचर्चा ॥

षोडशाध्यायस्तु—

"अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम्॥ (१६-१)
अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम्।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम्॥ (१६-२)

तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।
भवन्ति सम्पदं दैवीमभिजातस्य भारत ॥" (१६-३)

इति दैवसंपदः,

"दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।
अज्ञानं चाभिजातस्य पार्थ सम्पदमासुरीम् ॥" (१६-४)

इत्यासुरसंपदश्च निरूप्य, अर्जुनस्य दैवसंपत्सत्त्वमनुमन्य च, दैवासुरसंपदं प्रतिपन्नानाम्—प्रवृत्ति-निवृत्त्यादि-मार्गज्ञानादिकं प्रथमतो निरूपयति । तत्रासुरसंपदं प्राप्तानुपलक्ष्य—

"असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसम्भूतं किमन्यत् कामहेतुकम् ॥" (१६-८)

इति यद् भगवान् वदति, तेनाद्वैतवादोऽप्यासुरवादत्वेन निन्द्यते, यतो जगदसत्यमित्यद्वैतिनां वादः, इति द्वैतिनो मन्यन्ते । एतन्मतरीत्या—"असत्यमप्रतिष्ठं जगत्" "अनीश्वरं जगदपरस्परसंभूत कामहेतुक चे"ति वाक्यद्वयं मन्यते । तेन चाद्वैत-चार्वाकमतयोरुभयोरप्यासुरत्वमिति मन्यते । अद्वैतिनो विशिष्टाद्वैतिनश्च तु –जगदेतत् ब्रह्माकार्यं तदनात्मकम् , तथा ब्रह्मणि प्रतिष्ठितभिन्नम्, अनीश्वरम्—सर्वेश्वरेण सता न नियमितम्, किन्तु परस्परसम्बन्धेनैव जातम् , कामहेतुकं च, इति सर्वं वाक्यमेकवाक्यं मत्वा चार्वाक-मतनिराकरणपरमेवेति–मन्यन्ते । तथाच जगदसत्यमिति यद्यप्यद्वैतिनो मन्यन्ते, तथाप्यनीश्वरमिति न मन्यन्ते, इति नाद्वैतमतस्यात्र परामर्शः । वस्तुतस्तु—यावत्प्रतीति जगदपि सत्यमेवाद्वैतिनो मन्यन्ते, परमार्थतस्तु नास्तीत्येव मन्यन्ते, इति न सर्वात्मनाऽसत्यत्ववादोऽद्वैतमतेऽपि । द्विविधं हि सत्यत्वं "प्राणा वै सत्यम् । तेषामेष सत्यमि"त्यत्र स्वीक्रियते द्वैतिभिरपि । अन्यथा "सत्यस्य सत्यमि"त्यनन्वितमेव स्यात् , इति नाद्वैतमतस्यात्र निरासः ; यतो जगतो ब्रह्मनिष्ठत्वं तदभावश्चेति ब्रह्मणि प्रतिष्ठितत्वविशिष्टमेवासत्यत्वं गीता प्रतिपादयति । अत एव "असत्यमप्रतिष्ठमि"ति पदद्वयसार्थक्यम् , इति नाद्वैतवादस्यात्र निन्दा । परमार्थतस्तु—षोडशाध्याये दैवसंपद्रूपेणोक्तानाममानित्वादीनामेव त्रयोदशाध्याये ज्ञानयोगसाधनत्वोक्त्या तदेकवाक्यतापन्नम्—"दैवी संपद्विमोक्षाय" (१६ ५) इति वचनमपि ज्ञानयोगपरमेवेत्यवगम्यते । अतोऽत्र षोडशाध्याये कामप्राधान्येन कर्मयोगादिव्यवस्थानिषेधेन—

"तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ॥" (१६-२४)

इति शास्त्रप्रामाण्येन प्रतिपाद्यते । शास्त्रं तु शास्त्रयोनित्वाधिकरणन्यायादिनाऽद्वितीयब्रह्ममात्रपरम् , इति षोडशाध्यायोऽपि नाद्वैतवादस्य प्रतिकूलः ॥

॥ सप्तदशाध्यायस्याद्वैतमताविरोधः ॥

सप्तदशाध्यायस्तु—सात्त्विक राजस तामसभेदेन पुरुषान्, आहारान्, यज्ञम्, शारीर वाचिक-मानसरूपं तपः, दानं च विभज्य सात्त्विकानामेव तेषामादरणं योग्यमिति प्रतिपादयति। तत्र हि--

"ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधो मतः।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ (१७-२३)
तस्मादोमित्युदाहृत्य यज्ञ-दान-तपःक्रियाः।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥ (१७-२४)
तदित्यनभिसन्धाय फलं यज्ञ-तपःक्रियाः।
दानक्रियाश्च विविधाः क्रियन्ते मोक्षकामिभिः ॥ (१७-२५)
सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते।
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥ (१७-२६)
यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते।
कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥" (१७-२७)

इत्योंतत्सदितिशब्दोच्चारणपूर्वकं ब्रह्मार्पणबुद्ध्या कर्म कर्तव्यमिति बोधनात्, परम्परया कर्मयोगस्यापि मोक्षे पर्यवसानमित्येव गमयति। तत्र "ओमिति ब्रह्मवादिनाम्" इति वर्णनेन परोक्षविधया कर्मयोगादि-कालेऽप्योमित्योंकारार्थो माण्डूक्योपनिषत्प्रतिपाद्याद्वितीयतुरीयात्माऽनुसन्धेय इति ज्ञापनेनाद्वैतवादोपयोग्येव कर्मयोगोऽपीति ज्ञाप्यते। ततश्च सप्तदशाध्यायोऽप्यद्वैतिनामेवानुकूलः ॥

॥ अष्टादशाध्यायस्याद्वैतमताविरोधः ॥

एतेन—अष्टादशाध्यायोऽपि--व्याख्यातः। तथाहि—

काम्यानां कर्मणां न्यासः संन्यासः, फलत्यागस्त्याग इति त्याग-संन्यासयोः स्वरूपविवेचनपूर्वकम्—त्यागस्यैवौचित्यमिति केषाञ्चन मतम्, संन्यासस्यैव मुख्यत्वमित्यपरेषां मतं चोपक्षिप्य, कर्मणां स्वरूपत्यागा योगमुपपाद्य, तामस-राजस सात्त्विकभेदेन त्यागं विभज्य, त्यागं प्रशस्य, संन्यासम्--इष्टानिष्टमिश्रकर्मफलसंभवेन विनिन्द्य च —

"पञ्चैतानि महाबाहो कारणानि निबोध मे।
साङ्ख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥

"अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥" (१८-१४)

इति कर्मानुष्ठाने पञ्चानामेतेषां हेतुत्व निरूप्य, तत्रात्मनः कर्तृत्वेऽज्ञाते न ज्ञानोत्पत्तिः, स्वस्याहम्भावाद्यभावे तु कृतेऽपि कर्मणि न फलभाक्त्वमिति कर्मविषये प्रस्तुतमात्मनोऽकर्तृत्वमनहमर्थत्वं चोपपाद्य, कर्मणीव ज्ञानेऽपि—

"ज्ञानं ज्ञेयं परिज्ञाता विविधा कर्मचोदना ।
करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः ॥ (१८-१८)
ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः ।
प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि ॥ (१८-१९)
सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥ (१८-२०)
पृथक्त्वेन तु यज्ज्ञानं नानाभावात्पृथग्विधम् ।
वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥ (१८-२१)
यत्तु कृत्स्नवदेकस्मिन् कार्ये सक्तमहेतुकम् ।
अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥" (१८-२२)

इति सत्त्वादिपरिणामरूपं ज्ञानं त्रिधा विभज्य, तस्य, कर्मणश्च सात्त्विकादिरूपं प्रतिपाद्य, एवमेव कर्तारम्, बुद्धिम्, धृतिम्, सुखम्, ब्राह्मण-क्षत्रिय-विशां कर्माणि च प्रविभज्य, स्वभावनियतकर्मत्यगायोगं च निरूप्य, सर्वत्रासक्तबुद्धित्वे संन्यासेन नैष्कर्म्यसिद्धिम्, तेन ब्रह्मप्राप्तिं च सविस्तरं विविच्य, चेतसा सर्वकर्मणां परमात्मनि संन्यासेनात्मज्ञाननिष्ठामुपवर्ण्य, अहंकारवतोऽर्जुनस्य सर्वकर्मसंन्यासानधिकारमुक्त्वा, सर्वेश्वरशरणागतिं सर्वभावेन कर्तव्यामुपदिश्य चान्ततः—

"सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥" १८-६६

इत्युपसंहृतम् ॥

अनेन च सर्वकर्मसंन्यासपूर्वकात्मज्ञाननिष्ठैव ज्ञानयोग इत्यद्वैतसिद्धान्त एवोपक्रम परामर्शोपसंहारानुगृहीत इति विशदीभवति । अत एव "संन्यासं कर्मणां कृष्ण" इति संन्यासविषयकप्रश्नेनोपक्रमः, सात्त्विकादित्याग निरूपणानन्तरम्—

"असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥" (१८-४४)
"सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे ।
समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ॥" (१८-५०)

इति परामर्शः,

"सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥" (१८-६६

इति सर्वकर्मसंन्यासेनोपसंहारश्चोपपद्यते, इतित्याग एव सात्त्विकादिविभागेऽपि संन्यासे तदसंभवात् पूर्वोक्तरीत्या संन्यासस्य सात्त्विकताया एवानुगीतायां निरूपणाच्चाद्वैतमतमेवात्र विशदमिति गम्यते ॥ यत्तु—

"नियतस्य तु संन्यासः कर्मणो नोपपद्यते ।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥" (१८-७)

इति वचनम्, तेन तु सत्यधिकारे तत्त्यागस्यैव तामसत्वं प्रतिपाद्यते ; अत एव मोहादिति हेतूपन्यासः, नतु वैराग्येऽप्युत्कटे संन्यासाधिकारे जातेऽपि तस्य तामसत्वम् ॥

वस्तुतस्तु--नायं तामसः संन्यासः, किन्तु त्याग एवेति त्यागस्य तामसत्वमात्रेण संन्यासानौचित्यकल्पना कथमुपपद्यते ? अन्यथा--

"नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥" (१८-९)

इति संन्यासविधानं कथमुपपद्यते फलनिर्देशपूर्वकम् । अतः कर्मयोगे, भक्तियोगे वा कारणानि पञ्च, त्रीणि वा क्षेत्रज्ञस्य जीवस्य कर्तृत्वाभिमाने सत्येव भवति, नान्यथा, सर्वकर्मसंन्यासपूर्वकज्ञाननिष्ठायां तु नैवम् ; आत्मनोऽकर्तृत्वादिज्ञानवतामेव ज्ञाननिष्ठावशेन स्वीकरणेन तत्र प्रकृत्यादावेव, कर्तृत्वादिबुद्धिमत्त्वेन च कर्मयोगाधिकारविलयात् । अतः सर्वधर्मान् परित्यज्येति वाक्ये यथाश्रुतयोजनया--

"नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ।"
"सिद्धिं प्राप्तो यथा ब्रह्म तथाऽऽप्नोति निबोध माम् ॥
समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ।" (१८-५०)

इति श्लोकार्थ एव विवक्ष्यते ; सर्वकर्मसंन्यासानन्तरज्ञाननिष्ठायामेवात्रापि तात्पर्यात् । अनेन चेदमेव सूच्यते—असक्तबुद्धित्व विजितात्मत्व विगतस्पृहत्वादिकं विना सर्वकर्मसंन्यासो न योग्य इति पार्थमुद्दिश्य "मोहात्तस्य परित्यागस्तामसः परिकीर्तितः" इत्युक्तस्तामसत्यागो मा क्रियताम्, यतोऽहंकारमाश्रित्यैव न

योऽस्य इति त्वयोच्यत इति भगवतोऽभिप्रायोऽवगम्यते। अत एव स्वस्यानधिकारं सर्वकर्मसंन्यासे विहायैवार्जुनस्य "करिष्ये वचनं तव" इति प्रतिज्ञाय युद्ध एव प्रवृत्तिरपि न विरुध्यते ॥

अत एव--अनुगीतायां ब्राह्मणी-ब्राह्मणसंवादे पञ्चविंशाध्याये—

"मनो मे ब्राह्मणं विद्धि बुद्धिं मे विद्धि ब्राह्मणीम्।
क्षेत्रज्ञ इति यश्चोक्तः सोऽहमस्मि धनञ्जय ॥"

इति वचनम्, येन मनो बुद्धिविविक्तं संविन्मात्रमेव "क्षेत्रज्ञं चापि मां विद्धि" इत्यत्र वाक्यार्थ इति गम्यते ॥

॥ साङ्ख्यादिदर्शनानां तृतीयषट्के न स्थानम् ॥

अथ तृतीयषट्के साङ्ख्यादिदर्शनानां स्थानमधिकृत्य किञ्चिदिव निवेदयामः।

अत्र हि—'क्षेत्रज्ञं चापि मां विद्धि' इति जीव-परमात्मनोरभेदप्रतिपादनान्न साङ्ख्य-योगयोः पर्यवसानम्। सर्वेषु क्षेत्रेष्विति बहुवचनेन, क्षेत्रज्ञमित्येकवचनेन च जीवभेदनिरासोऽप्यत एवोपपद्यते। एतेन—योगदर्शनमपि—व्याख्यातम्; जीवेश्वराभेदस्य तत्राप्यभावात्। विज्ञानभिक्ष्वभिमतमाधाराधेयभावनिबन्धनं सामानाधिकरण्यं तु नित्यानां जीवानामीश्वरेण न संभवति। मोक्षस्वरूपं तु "ते यान्ति परमं पदम्" इति वर्णनान्न दुःखध्वंसमात्ररूपम्, किन्तु तत्पूर्वकब्रह्मभाव एवेति तत्रापि ततो विशेषः। एतेन—नैयायिकादिदर्शनानामपि नावकाशोऽत्रेति—सूच्यते। मोक्षसाधनं तु भगवद्गीतावगतं न साङ्ख्य योगाद्यभिमतम्। तथाहि—द्वितीयाध्याये—

"तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि।
एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु ॥" (२-३९)
"बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः।" (२-४९)
"समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥" (२-५३)
"स्थित्वाऽस्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति।" (२-७२)

इति कर्मयोगस्य साक्षात् परम्परया वा फलं स्थितप्रज्ञैवेति प्रतिपाद्यते। तृतीयाध्यायेऽपि—

"एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना।
जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥" (३-४३)

इति ज्ञानस्यैव सारथिरूपबुद्धिस्थानापन्नसविशेषब्रह्मव्यतिरिक्तविषयकस्य मोक्षसाधनत्वं प्रतिपाद्यते। एवमेव तुरीयाध्याये—

"श्रेयान्द्रव्यमयाद्यज्ञाद् ज्ञानयज्ञः परन्तप।
सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥" (४-३३)

इति ॥

"भोक्तारं यज्ञ-तपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥" (५-२९)

इति पञ्चमाध्यायोऽप्यत्रैव स्वरसः । षष्ठाध्यायेऽपि—

"सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥" (६-२९)

इति ज्ञानमेव मोक्षसाधनं मन्यते । सप्तमाध्यायः—

"बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥" (७-२९)

इति ज्ञानयोगस्यातिप्रशस्तत्वं प्रतिपादयति । अष्टमाध्यायोऽप्येतेन व्याख्यातः ;

"वेदेषु यज्ञेषु तपःसु चैव दाने च यत्पुण्यफलं प्रदिष्टम् ।
अत्येति तत्सर्वमिदं विदित्वा योगी परं स्थानमुपैति चाद्यम् ॥" (८-२८)

इति तस्यैव प्रतिपादनात् । नवमाध्यायस्तु— ज्ञानं विज्ञानसहितं गुह्यतमं प्रतिपादयन्नप्यत्रैवानुकूलः । दशमाध्यायस्तु—

"तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥" (१०-१०)

इति ज्ञानयोगस्यैव भगवत्प्राप्तिसाधनत्वं प्रतिपादयति । एवमेवैकादशाध्यायोऽपि ;

"भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । (११-५४)

इति भक्तिसाध्यज्ञानयोगस्यैव तत्र मोक्षहेतुत्वप्रतिपादनात् । द्वादशाध्यायस्तु—अक्षरावगमस्योत्तमाधिकारं प्रतिपादयन्नत्रैव स्वरसः । एवमेवान्यत्रापि । सति चैवं साङ्ख्य-योगयोर्मीमांसादर्शने वा न तात्पर्यमिति विशदमिदम् । द्वैत-विशिष्टाद्वैताद्वैतप्रक्रियास्त्वत्र तत्तदाचार्याभिमता निरूपिता एव ॥

एतावत्तु निश्चितमेव—यद्वैदिकं दर्शनमेव गीतातात्पर्यविषयः । तच्च सर्ववेदप्रामाण्येनैव निर्वहणीयम् । ज्ञानयोगश्चायं प्रत्यगात्मज्ञानयोग एवेति विशिष्टाद्वैतमतम्, ज्ञानसाधननिरूपणेनैव ज्ञानयोग इति द्वैतमतम्, यत्र तु पूर्वोक्तरीत्या न योगविभागो वस्तुगत्या । अत्र भक्तेरपि ज्ञानसाधनत्वं प्रतिपादितमनुपपन्नं मतद्वयेऽपि । अतो "मयि चानन्ययोगेने"त्यत्र भक्तिपदेन त्वभिनिवेशविशेष एव विवक्षित इति श्रीरामानुजाः समर्थयन्ति । वस्तुतस्तु सर्वेषां वेदानां गीतायाश्चाद्वैतपर्यवसान एव स्वारस्यम् । अधिकारभेदेन योगभेदव्यवस्था तु तेषामपि संमता ; इत्यद्वैतमतावलम्बने न व्यवहारबाधः कोऽपीत्यलमिदानीमियतैव ॥

———

# ॥ भगवद्गीता मतत्रयव्याख्याविमर्शश्च ॥

## ॥ दशमं व्याख्यानम् ॥

॥ गीताया द्वितीयाध्यायैकादशश्लोकमारभ्य
प्रवृत्तगीतोपदेशानां मतत्रयाभिमतार्थसमालोचनम् ॥

अथ मतत्रयानुसारेण गीतार्थनिरूपणम् , तत्राद्वैतिनां विचारपरम्पराश्च संगृह्यन्ते । तत्रावतरणभागेषु प्रायेण तात्पर्ये न विप्रतिपत्तिरिति द्वितीयाध्यायैकादशश्लोकमारभ्य विचारप्रणाली प्रस्तूयते ॥

"अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥" (२-११)

अत्र मतत्रयेऽपि भीष्मादीनामशोच्यत्वे न विप्रतिपत्तिः । प्रज्ञावादस्तु द्वैतिनां दृष्ट्या स्वकपोलकल्पनामात्रम् , नतु बुद्धिमतां वादो मतान्तरयोरिव । 'गतासू'नित्यत्र तु गतासुपदेनासन्नमरणत्वं द्वैतमते, यत्र नाद्वैतमतेऽपि विरोधः । विशिष्टाद्वैतमते तु तेन देहानामेव ग्रहणमिति विशेषः । "अगतासूनि"ति तु दृष्टान्तार्थमिति द्वैत-विशिष्टाद्वैतमते, अद्वैतमतं तु समुच्चय एवात्र विवक्ष्यत इति । शरीरं जीवात्मानं प्रति वा शोको न कर्तव्य इति तु समानमेव सर्वत्र ॥

अत्राद्वैतमते—"येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके" इति कठवल्लीप्रश्नोत्तरत्वेन कठवल्ल्येकवाक्यता भगवद्गीतायाः ; जीवमरणसत्त्वासत्त्वशङ्कासमाधानार्थत्वस्य, तस्य धर्माधर्माद्यतीतत्वाद्युपन्यासस्य च समानत्वात् , यदि "येयं प्रेते"इत्यस्य जीवमरणप्रश्नपरतैव स्यात् । मतान्तरयोस्तु मुक्तान्तर्यामिप्रश्न एव यत्र विवक्ष्यते, तत्र तु नैकवाक्यतेति विशेषः । तथाच शरीरविनाशेनैवात्मनो विनाशव्यपदेशमात्रम् ; "अविनाशी वा अरेऽयमात्मा" "मात्रासंसर्गस्त्वस्य भवती"ति श्रुतेरिति व्यवस्थापनम् । तत्र च कर्मणो न साक्षान्मोक्षोपयोगित्वम् ; आत्मरूपस्य तस्य ज्ञानमात्रप्राप्यत्वादिति कठवल्ल्यादिवेदान्तार्थ एव गीतार्थः । स चात्मनः परमात्माभेदेनैकत्वेन च निर्वहतीत्यद्वैतिनः, अन्ये तु--परमात्मानुसन्धानाधीन एव मोक्षः, तदनुसन्धानाङ्गतया जीवात्मज्ञानमपि ज्ञानयोगाभिधेयं तत्र तत्र कठवल्ल्यादौ निर्दिश्यत इति तावन्मात्रसंग्रह एव द्वितीयाध्यायादौ क्रियत इति--वदन्ति । एतन्मतरीत्या तु—अहमर्थ एव मुख्यो जीवात्मा नाम । स च नित्यः । प्रत्यात्मं नाना चेति मन्यते । अद्वैतमते तु तद्विपरीतम् , इति तन्निरूपणार्थं श्लोकः—

"न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।
न चैव न भविष्यामः सर्वे वयमतः परम् ॥" (२-१२)

इति। अत्राहंपदेन भगवान् श्रीकृष्णो गृह्यते। स च परमात्मा नित्य इति दृष्टान्तविधया मन्यत इति न विप्रतिपन्नम् ; तत्र स्वरूपतो जीवेश्वरनित्यत्वस्य साधारण्यात्। स्वरूपं परं विशिष्टमेव नित्यमिति मतान्तरे, अद्वैतमतं तु नित्यं स्वरूपम् , अबाध्यं वा संविन्मात्रमेवोभयोरपि। अत एव—"बहूनि मे व्यतीतानि जन्मानि तव चार्जुन।" इत्युत्तरत्र भगवद्वचनम् , इत्यौपाधिकेऽनित्यत्वेऽपि संविन्मात्ररूपेण नित्यत्वेनैवाविरोधः। एतेन—जीवेश्वरभेदो जीवानां परस्परभेदश्च—व्याख्यातः ; तस्याप्युपाधिनिबन्धनस्यापारमार्थिकस्य विशिष्टविषयस्याद्वैतमतसाधारण्यात्। संविन्मात्ररूपेण तु भेदो नाद्वैतमते, किन्त्वैक्यमिति हि तदीया मर्यादा॥

सति चैवं जीवेश्वरयोर्विशिष्टयोर्भेदस्य व्यावहारिकस्याद्वैतमतेऽपि स्वीकाराद् जीव-ब्रह्मैक्यस्य संविन्मात्रनिबन्धनस्य तदविरोधित्वाद् भगवद्रामानुजाचार्याणाम्—अस्मिन् श्लोके, "सर्वधर्मान् परित्यज्य"-त्यन्तिमश्लोके चाद्वैतमतेऽर्जुनादिसंबोधनेन भगवतोऽप्युपदेशकत्वानुपपत्तिशङ्काऽपि नावसरति। उत्पन्नतत्त्वज्ञानस्यापि भगवत आधिकारिकपुरुषत्वेनेन्द्रविरोचनाद्युपाख्यानादिन्यायेन बाधितानुवृत्त्याऽऽहार्यारोपेण वोपदेशकत्वं हि निर्वहत्येव। अत्र—"न त्वेवाहमि"ति दृष्टान्ततया, प्रतिपाद्यतया वा परमात्मनित्यत्वस्याप्यनुसन्धानं जीव-ब्रह्मणोस्संविन्मात्रेणाभेदसिद्धान्तं पोषयतीत्यद्वैतसमयः। अहंपदार्थस्तु न मुख्यात्मा ; जागरादौ शरीरभेदेऽप्यात्मैक्यानुसन्धानेनाहंबुद्धिविषयस्य स्थूलशरीरस्यानात्मत्वात् , तेनैव न्यायेन सूक्ष्मशरीरविनाशेऽपि व्यष्टिकारणशरीरतादात्म्येन सुषुप्तौ भानावस्थायां व्यावर्तमानस्य सूक्ष्मशरीरस्याप्यनात्मत्वात्, एवमेव तुरीयावस्थायां व्यावर्तमानस्याज्ञानस्यानहमर्थत्वस्य स्वीकरणीयत्वाच्चेति निरूपणं हि स्थूलशरीरस्याहमर्थव्यावृत्तिबोधनं विना न संभवतीति स्थूलशरीरं व्यावर्तमानम्, अहमर्थस्त्वपरोऽनुवर्तमान इति बोधनार्थं श्लोकः—

"देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥" (२-१३)

इति। मतत्रयेऽपि स्थूलशरीरातिरिक्तात्मस्वरूपमेवात्र बोध्यत इति समानम् , परं तु जन्मान्तरग्रहणार्ह आत्माऽहंपदार्थो मुख्य इत्यपरमतम्, अद्वैतमतं तु सोऽपि जागरिक आत्मेव मिथ्यात्मेति। यतोऽत्र स्थूलशरीरानात्मत्वमुपलक्षणमेव सूक्ष्मशरीराद्यनात्मत्वस्यापि। तेन च संविन्मात्रात्मनो निरुपाधिकस्य न जन्म-मरणे, किन्तु व्यावहारिकस्यैवात्मनः, इति तमप्यात्मानं धर्माधर्मगोचरमादायाशोच्यत्वमेव भीष्मादीनाम्, इति लक्ष्यार्थविषयत्वं "न त्वेवाहमि"ति श्लोकस्य। अस्य तु वाच्यार्थविषयत्वमिति विवेकोऽद्वैतमते, इति नोपदेशानुपपत्त्यादिदोषोऽद्वैतमते, इति पूर्वोक्त एवार्थोऽनेनापि समर्थ्यते। अतः कारण-सूक्ष्म-स्थूलशरीरोपाधितादात्म्याध्यासनिबन्धना अहं-ममेत्याद्यध्यासाः, तदधीनाश्च सर्वे व्यवहाराः। वस्तुतस्तु चैतन्यान्तःकरणादेः परस्परतादात्म्ये

नैवाहमादिव्यवहारा इत्यध्यासभाष्याभिमतधर्म्यध्याससमर्थनमेवात्रेत्यद्वैतिनः। अन्यत्र तु—उत्क्रान्तिगत्यादिनिरूपणेनाणुपरिमाणत्वसूचनादिनाऽहमर्थस्यैव स्वरूपविवेक एवात्र क्रियते ॥

"मात्रास्पर्शास्तु कौन्तेय शीतोष्ण-सुख-दुःखदाः।
आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥" (२-१४)

इति श्लोकस्तु मतत्रयेऽपि देहात्माभिमानप्रयुक्तः शीतोष्णादिसुख-दुःखसम्बन्ध इत्येव बोधयति। इयान् विशेषः—सुख-दुःखादिधर्माध्यासस्यापि निरूपणार्थमयं श्लोक इत्यद्वैतमतम्, अन्यत्र सुख दुःखादिरप्यात्मनः पारमार्थिको धर्म इति। सति चैवं "यत्र यदध्यासस्तत्कृतेन दोषेण गुणेन वाऽणुमात्रेणापि स न सम्बध्यते" इति न्यायात् सुख-दुःखादिभाक्त्वमात्मनो न संभवति, यदि संविन्मात्ररूपेणात्माऽनुसन्धीयेत, इति नार्जुनस्य भीष्मादेर्वा स्वस्वरूपानुसन्धानवतो शोकार्हता, इति भीष्मादीनात्मस्वरूपज्ञानवतोऽधिकृत्य न शोच्यत्व युक्तम्; तेषाममरणधर्माणाम्, अमृतत्वं प्राप्तानां वा सुख-दुःखे समे कृत्वा लाभालाभौ जयाजयौ वा युद्धार्थं प्रवृत्तानां धीराणां हि कथं शोकार्हत्वमिति बोधनार्थम्, युद्धादिशास्त्रीयकर्मकालिकशस्त्रपातादिसहनं विना नामृतत्वस्य लाभ इति बोधनार्थम्, शीतोष्णादिविफलीकरणसाधनं धैर्य विना न दुःखाभाव इति निरूपणार्थं वा श्लोकः—

"यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥" (२-१५)

इति। अत्र मतत्रयेऽप्यात्मनो नित्यत्वे, शीतोष्णादिद्वन्द्वसहनेनामृतत्वप्राप्तौ च न विसंवादः। अमृतत्वं तु ज्ञानमात्रसाध्यमित्यद्वैतिनः, उपासनाद्वारेणेति तु मतान्तरे, इति तु विशेषः ॥

"नासतो विद्यते भावो नाभावो विद्यते सतः।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥" (२-१६)

इति श्लोकस्तु प्रकृति-परमात्मोभयनित्यत्वमनुवदति। तत्र च परमात्मनित्यत्वं 'न त्वहमि'ति श्लोके दृष्टान्ततया विवक्षितम्, इमं श्लोकं सिद्धवत्कृत्यैव। अत्र तु प्रकृतेरपि नित्यत्वमधिकमसच्छब्दवाच्यायाः प्रतिपाद्यत इति तु विशेष इति द्वैताचार्याः। भगवद्रामानुजाचार्याः—देहात्मनोरत्रानित्यत्वं नित्यत्वं च प्रतिपाद्यते—इति। अद्वैताचार्यास्तु—"न त्वेवाहमि"ति श्लोकेन संविन्मात्रेण स्वप्रकाशेनात्मस्वरूपस्य नित्यत्वं दृष्टान्तविधया, प्रतिपाद्यतया वा विवक्षितम्, अत्र तु सद्रूपेणापि तस्य नित्यत्वं प्रतिपाद्यते, इति संविद एव सदात्मनाऽनुवर्तमानत्वात् तदतिरिक्तं सर्वं व्यावर्तमानं मिथ्यैवेति ज्ञाप्यते, इति निरूपणेन नित्यत्वानित्यत्वचर्चेयं त्रिकालाबाध्यत्व-तदभावरूपसत्त्वासत्त्वे एव गोचरयतीति पर्यवस्यति, इति देहादीनां तद्भेदस्य चानिर्वचनीयत्वेन "तत्त्वमसी"त्यादावभेद एव सामानाधिकरण्यम्, इति ब्रह्मेतरमिथ्यात्वनिरूपणेन सप्रयोजनोऽयं श्लोक इति—आशेरते ॥

"अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।
विनाशमव्ययस्यास्य न कश्चित् कर्तुमर्हति ॥" (२-१७)

इत्यत्राविनाशि वम्, व्यापकत्व च शब्दस्येति द्वैतमतम्, यत्तु न प्राप्तकालम् । विशिष्टाद्वैतमते तु—व्यापकत्वमात्मतत्त्वस्य, नतु प्रत्येकमात्मनः ; तस्याणुपरिमाणत्वात् । तच्चात्मतत्त्वं संविद्रूपमेव भवितुमर्हति, नान्यत्किमपि व्यापकत्वयोग्यमिति त्वद्वैतम । न ह्यात्मत्वजात्यनुगमः सर्वत्रानात्मस्वपि संभवति, संविद्रूपं तु कारणत्वेन "नासतो विद्यते भावः" इत्यत्रोक्तविधया सर्वत्र सद्रूपेणानुगतमेवेति न विरोधोऽद्वैतमते । तत्र भीष्मादिप्रत्यात्मविनाशायोग्यत्वमेव हि स्वस्वरूपेणात्र प्रस्तुतम्, इत्यात्मतत्त्वस्य तन्निरूपणम्, द्वैतमते वर्णव्यापकत्वादिविवरणमिवाप्राप्तकालमेव ॥

अत एवोत्तरश्लोकः—

"अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।
अनाशिनोऽप्रमेयस्य तस्माद् युद्धयस्व भारत ॥" (२-१८)

इति । अत्र ह्यात्मनित्यत्वे साधिते—"चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वादि"ति ब्रह्ममीमांसाद्वितीयाध्यायतृतीयपादे वियत्पादाख्ये व्यवस्थापितरीत्योत्पत्ति-विनाशप्रत्ययो जीवस्य स्वोपाधिशरीरोत्पत्तिविनाशमेव तदीयतया भक्त्या गोचरयति । तेन च—"अविनाशी वा अरेऽयमात्मा" "मात्रासंसर्गस्त्वस्य भवती"ति श्रुत्येकवाक्यताऽपि सिद्ध्यतीत्यद्वैतिनः, यत्र—अप्रमेयत्वमप्यत्र बोधित फलव्याप्यत्वाभावेन "यस्यामतं तस्य मत मत यस्य न वेद सः" इति केनोपनिषदुक्तरीत्या न विरुध्यते । "अविनाशि तु तद्विद्धि" इति वेदनविषयत्वं तु बोधितं वृत्तिव्याप्यत्वमादायोपपद्यत इति त्वद्वैतिना समयः । अत्र द्वैतिनो मन्यन्ते—ईश्वरप्रतिबिम्बस्य नित्यानित्योपाधिद्वयस्य जीवस्य देहाः केवलमन्तवन्तः, न त्वात्मस्वरूपमन्तवत्, इति देहनाशस्यानिवार्यत्वाद् युद्धकर्तव्यता नियम्यते । अप्रमेयत्वं चात्र जीवस्याप्रमेयपरमात्मसरूपत्वेनेति । विशिष्टाद्वैतिनस्तु—अप्रमेयपदेन प्रमेयभिन्नः प्रमाता विवक्षित इति—वदन्ति । तत्र मतद्वयेऽपि—अप्रमेयपदे लक्षणादोषः, परमात्मनो जीवात्मनश्च प्रमेयत्वस्यैव स्वीकारात् प्रमेयभिन्नत्वासंभवश्च दुर्निवारः । अद्वैतमते तु न दोषलेशोऽपि । न केवलम्—केनोपनिषदाद्येकवाक्यता, किन्तु पूर्वोक्तरीत्या भगवद्गीतायाः प्रधानमूलकठवल्ल्येकवाक्यताऽप्यद्वैतमत एवेति निरूपयितुं द्वौ श्लोकौ तत्समानार्थकठवल्ल्या एव रूपान्तरं मत्वा मन्त्रावित्यवतार्येते भगवत्पादादिभिः—

"य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ (२-१९)
न जायते म्रियते वा कदाचिद् नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥" (२-२०)

इति। अत्र द्वैतमतम्—बिम्बनित्यत्वोपाधिनित्यत्व-बिम्बसांनिध्यनित्यत्वादिभ्यो जीवो न हन्यते ; प्रतिबिम्बस्य जीवस्य बिम्बक्रिययैव क्रियावत्त्वात् स्वयमस्वतन्त्रत्वाच्च न हन्तृत्वम्, हन्यमानत्वं वा जीवस्य —इति। विशिष्टाद्वैतमतमपि—जीवस्यास्वतन्त्रत्वान्न हन्तृत्वम्, परमात्मन एव कर्तृत्वमिति विवक्षणाद् द्वैतमतेन समानमेव, जीवस्येश्वरप्रतिबिम्बत्वास्वीकारात्तु ततो विशेषः। हन्यमानत्वायोगस्तु नित्यत्वाधीन एव मतद्वयेऽपि। नित्यत्वं न बिम्बसांनिध्यादिनित्यत्वप्रयुक्तमिति त्वपरो विशेषः—इति। अद्वैतमते तु—हन्तेति हत इति वा मन्यमानोऽहंपदार्थो न मुख्यात्मा, किन्तु मिथ्यात्मैव संविद्रूपस्यात्मन एवासङ्गस्य कर्तृकर्मभावादिनिषेधो विवक्ष्यत इति। तेन चाहमर्थानात्मतावादव्यवस्थापनेन प्रत्यगात्मस्वरूपमत्र निष्कृष्यते—इति। तत्र द्वैतमते न नित्यानित्योपाधिद्वये मानम्। अनित्योपाधिमात्रविवक्षया जीवप्रतिबिम्बवादस्तु जीवस्याद्वैतमतेऽप्यविशिष्टः। अतो नित्यप्रतिबिम्बत्वेनाहन्यमानत्वसाधनं न युज्यते। एतेन—जीवकर्तृत्वमपि—व्याख्यातम्। उपहितस्य जीवस्य स्वयं कर्तृत्वेऽप्यनुमन्तृत्वादिना भगवतोऽपि प्रयोजककर्तृत्वविवक्षणं युक्तमिति। जीवस्य हन्तृत्वनिषेधोऽप्यत एव न युज्यते। एतेन—विशिष्टाद्वैतमतमपि—व्याख्यातम्। तन्मतेऽपि जीवस्य स्वतः कर्तृत्वेन कर्तृत्वमात्रनिषेधो नोपपद्यते। संविन्मात्रात्मतापक्षे तु न काऽप्यनुपपत्तिरिति प्रथमश्लोकविषयिणी चर्चा॥

"न जायते" इति श्लोकव्याख्या तु द्वैताचार्याभिमता—जीव-परमात्मोभयोत्पत्त्यादिनिषेधपरा। तत्र न जायते विपश्चित्, न वा म्रियते कदाचिदयम्, यतो जन्मादिविकाररहितः—इति। अयं भूत्वा न भवितेति वृद्धिह्रासादिनिषेधः, इति त्रयाणामपि नञां यथाश्रुतान्वयोऽत्र। परमात्मपरतायां तु नायमित्यत्र नाशब्दः पुरुषोत्तमपरः, इति नञ्द्वयमेव तत्र वर्तते। अत्र प्रथमस्यैव नञो 'म्रियते वे' त्यत्रानुषङ्गाद् न विरोधः। विशिष्टाद्वैताभिमता व्याख्या—अयं जीवो न जायते, म्रियते वा, जनन-मरणयोः शरीरधर्मत्वात्—इति। अद्वैतमतेऽप्येवमेव व्याख्या। तत्र द्वैतमते "अन्तवन्त इमे देहाः" इत्यनेनैकार्थता। विशिष्टाद्वैतमते तु—जीवस्यापि स्वरूपत एवोत्पत्ति-विनाशाद्यभावस्वीकारः। एवमेवाद्वैतमतेऽपीत्यादि पूर्वोक्तमेव सर्वं मन्त्रलिङ्गवशेनापि दृढीक्रियते। अतः संविद्रूपेण, स्वरूपेण वा जीवात्मज्ञानमेवाशोच्यत्व प्रयोजयिष्यतीति भीष्मादीनां न हननादिसंभव इति भावः। य एव विशदीक्रियते—

"वेदाविनाशिनं नित्यं य एनमजमव्ययम्।
कथं स पुरुषः पार्थ कं घातयति हन्ति कम्॥ (२-२१)
वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही॥ (२-२२)
नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः॥ (२-२३)

अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥" (२-२४)

इत्यादिना । अत्र सर्वत्र मतत्रयेऽपि पूर्वोक्तरीत्या तत्तदभिमतजीवस्वरूपनित्यत्वमेव तत्तदभिमतसर्वगतत्वादिनिरूपणेन व्यवस्थाप्यते—द्वैतमते परमात्मस्वरूपत्वेन, विशिष्टाद्वैतमते चित्त्वादिना, सर्वानुप्रवेशयोग्यत्वादिना वा, अद्वैतमते संविद्रूपेण—इति । अद्वैताभिमतमेव मुख्यं गीताचार्याभिमतमिति तु—

"अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥" (२-२५)

इति श्लोको विशदयति । अत्राव्यक्तपदप्रयोगेण हि द्वादशाध्याये—

"ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥" (१२-३)

इति प्रस्तुतमव्यक्तमेव प्रत्यभिज्ञाप्यते ; अव्यक्ताचिन्त्याविकार्यत्वादिसाम्यात् । तच्चाद्वैतमतरीत्या निर्विशेषसंविन्मात्रमेव, भगवद्रामानुजमते तु प्रत्यगात्मस्वरूपम्, द्वैतमते तु तत्र मायैवेति तदेकवाक्यतामात्रं द्वैतमतेन, अत्रात्मन एव विवक्षणात् । विशिष्टाद्वैतमते तु सत्यमस्त्येकवाक्यता ; तथापि सर्वत्रगत्वं तत्र भाक्तं स्वीक्रियते, अद्वैतमते तूभयत्र यथाश्रुतार्थस्वीकारेणौचित्याधिक्यमिति विशेषः । सति चैव परविद्यैकवाक्यताऽप्यद्वैतमते एव, न मतान्तरे । अचिन्त्यत्वं तु न बाधितमेव । सर्वथा तु कठवल्ल्यभिमततयाऽद्वैताभिमतसंविद्रूपमादायाशोच्यत्वव्यवस्थापनमेव वस्तुस्थित्यनुसारेण ॥

अपरमार्थदृष्टिमाश्रित्य विचारणायामपि युद्धकर्तव्यता नियतैवेति बोधनार्थमेव—

"अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथापि त्वं महाबाहो न त्वं शोचितुमर्हसि ॥ (२-२६)
जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ (२-२७)
अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥" (२-२८)

इति श्लोक इति सर्वसंप्रतिपन्नम् । यतोऽत्र देहेन साकमुत्पत्ति-विनाशशाल्येव देहातिरिक्तोऽप्यात्मेत्यादिमतमाश्रित्यैव युद्धे प्रवर्तनमत्र क्रियते । इयं तु न वस्तुस्थितिः, किन्तु अभ्युपगममात्रेणेति निरूपणार्थमात्मनोऽनित्यवादिकमपि पूर्वोपक्षिप्तं दुर्विज्ञेयत्वादिना निरूप्य वस्तुस्थितिरेवात्रोपसंहर्तव्येति मत्वा प्रवृत्तोऽयं श्लोकः—

"आश्चर्यवत्पश्यति कश्चिदेनम्
आश्चर्यवद्वदति तथैव चान्यः ।
आश्चर्यवच्चैनमन्यः शृणोति
श्रुत्वाप्येनं वेद न चैव कश्चित् ॥" (२-२९)

इति । अयं त्वीश्वरनिरूपणपरः तत्सारूप्येण जीवनिरूपणपरो वेति द्वैतमतम्, अद्वैत विशिष्टाद्वैतयोस्तु प्रत्यगात्मपरः । इयान् विशेषः—यदेतन्मूलवाक्ये—"आश्चर्यो वक्ता कुशलोऽस्य ज्ञाते" त्यत्र परमात्मपरत्वं कठवल्लीप्रकरण इति विशिष्टाद्वैतमतम्, अद्वैतमतं तु सर्वत्र संविन्मात्रपरमिति । एतेन—

"देही नित्यमवध्योऽयं देहे सर्वस्य भारत ।
तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥" (२-३०)

इत्यात्मावध्यत्वव्यवस्थापि—व्याख्याता ; देहादिसर्वप्रपञ्चविविक्तस्यैवात्मनो मुख्यात्मत्वस्यात्र प्रतिपादनात् । अत एवात्र—"तस्मात्सर्वाणि भूतानि" इति सर्वभूतान्यप्यधिकृत्याशोच्यत्वोपसंहारः । तदेवमाध्यात्मिकदृष्टिमवलम्ब्याऽशोच्यत्वम्, शोकवशेन युद्धादुपरातं चार्जुनं प्रत्युपदिशति स्म भगवान्—अर्थादभ्युपगमवादेन वाऽऽधिभौतिकदृष्टिमनुसृत्यापि । अतः परमाधिदैविकदृष्टिमनुसृत्यापि युद्धकर्तव्यत्वं व्यवस्थापनीयमिति प्रवृत्तौ श्लोकौ—

"स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते ॥" (२-३१)
यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥" (२-३२)

इति । अत्र द्वैतमते जीवात्माविनाशपक्षापरित्यागेन युद्धकर्तव्यता व्यवस्थापिता । अद्वैत-विशिष्टाद्वैतमतयोस्तु जीवस्यौपाधिकस्यौपाधिकं वा नाशमूरीकृत्य युद्धं तु शत्रुप्राणवियोगानुकूलव्यापाररूपमपि यागीयपश्वालम्भादिवद् न हिंसात्मकमिति "पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः" इति शङ्कायाः समाधानमत्र वर्ण्यते । तेन च—"वेपथुश्च शरीरे मे" "न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे" इत्याद्यर्जुनप्रश्नोऽप्युत्तरितो भवतीति सर्वसंप्रतिपन्नम् । तथाच तत्त्वज्ञाननिष्ठानधिकारं सिद्धवत्कृत्यार्जुनम्, तत्सदृक्षंवाऽधिकृत्य कर्मयोगोपदेश इत्यद्वैतमतम्, अन्यत्र तु ज्ञान-कर्मसमुच्चयपक्षसमर्थनमिति विशेषः फलति ॥

"अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥" (२-३३)

"अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम्।
संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥ (२-३४)
भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥ (२-३५)
अवाच्यवादांश्च बहून् वदिष्यन्ति तवाहिताः ।
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥ (२-३६)
हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥" (२-३७)

इति श्लोकास्तु मतत्रयेऽपि स्वधर्मबुद्ध्या, दृष्टफलदृष्ट्या, स्वर्गादीच्छया वा कथमपि तत्त्वज्ञाननिष्ठाया अनिष्पत्तौ युद्धकर्तव्यतैव नियता, अन्यथा तु पापं स्यादिति प्रतिपादयन्ति। तेन च "पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः" इति वदन्तमर्जुनं प्रति पापमेवाश्रयेत्त्वामहत्वैतानाततायिन इत्युत्तरं दत्तं भवति। युद्धमेव त्वया कर्तव्यम्, यतो हिंसायां रागतः प्राप्तेः सभावनापि न स्यात्, न वा ततः पापसंभावनादि, इति निरूपणार्थमयं श्लोकः—

"सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥" (२-३८)

इति। अनेन ह्येवं भावनया कर्म कुर्वाणानाम्, नात्मनि कर्तृत्वबुद्धिः, न वा भोक्तृत्ववासना, किन्तु— "निमित्तमात्रं भव सव्यसाचिन्" इत्येकादशाध्यायोक्तरीत्या स्वस्मिन्निमित्तत्वभावनैव संभाव्यत इति ज्ञाप्यते। अत्र द्वैत-विशिष्टाद्वैतयोर्भक्तियोगपर्यवसानेन कर्मानुष्ठानस्य पापनिर्हरणोपायत्वम्, अद्वैतमते तु सर्वकर्मसंन्यासपूर्वकात्मज्ञाननिष्ठाद्वारा तस्य पापनिर्हरणोपायत्वम्। अत एव—"नैवं पापमवाप्स्यसी"ति प्रासङ्गिक उपदेशः, नतु वस्तुगत्येति भगवत्पादभाष्यम्। तथाच ज्ञान कर्मसमुच्चयवादो यदि कर्म-भक्तियोगोभयाभिप्रायेण, तर्हि नात्र कस्यापि विप्रतिपत्तिः, यद्यद्वैताभिमताखण्डाकारवृत्त्याख्येन ज्ञानयोगेन, तर्हि तु बाधितमेव। यथाचाधिकारिकपुरुषाणां तत्त्वज्ञानिनामपि स्वाधिकारनिर्वाहार्थं कर्मानुष्ठानमपेक्षितमेव, तथाऽन्यत्र व्यक्तम्। वक्ष्यति च स्वयं भगवानेव—"लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसि" (३ २०)इति। सति चैवं सर्वकर्मसंन्यासपूर्वकात्मज्ञाननिष्ठायामेव शास्त्रसमाप्तिः, तदुपयोगितयैव कर्मणामनुष्ठानम्, निष्पन्नायां तु ज्ञाननिष्ठाया न कर्मानुष्ठानमपेक्षितम्, कर्म-सांख्ययोगयोरुभयोरपि न समुच्चयपक्षो योग्यः; भिन्नाधिकारिकत्वात्। अत एव वक्ष्यते—"ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम् ॥" (३-३)इति। इदमेवाभित्याह भगवान्—

"एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु ।
बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥" (२-३९)

इति । अत्र परमात्मतत्त्वज्ञानोपयोगितया जीवात्मतत्त्वज्ञानमभिधाय कर्मयोगोऽपि वर्णयिष्यत इति द्वैतमतम् । विशिष्टाद्वैतं तु जीवात्मतत्त्वज्ञानपूर्वककर्मयोगस्य भक्तियोगसाधनत्वाद् जीवात्मतत्त्वज्ञान-कर्मयोगयोः क्रमेणोपदेश —इति । अद्वैतं तु—"योगे त्विमामि"ति 'तु' शब्दप्रयोगेण ज्ञान कर्मयोगयोरत्यन्तविरोधो मन्यते—इति निष्कर्षः । अतः कर्मयोग एव तत्त्वज्ञाननिष्ठापर्यन्तं सर्वादरणीयः पन्थाः, यस्यानुसरणेन कर्मफलमप्यनुषङ्गतो लप्स्यते, मुख्यं च तत्त्वज्ञानमपीति निरूपणार्थं श्लोकाः—

"नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ (२-४०)
व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥ (२-४१)
यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥ (२-४२)
कामात्मानः स्वर्गपरा जन्म-कर्मफलप्रदाम् ।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ (२-४३)
भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेसाम् ।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ (२-४४)
त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ (२-४५)
यावानर्थ उदपाने सर्वतः संप्लुतोदके ।
तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ (२-४६)
कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥ (२-४७)
योगस्थः कुरुकर्माणि सङ्गं त्यक्त्वा धनञ्जय ।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ (२-४८)
दूरेण ह्यवरं कर्म बुद्धियोगाद् धनञ्जय ।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥" (२-४९)

इति। वैष्णवधर्मानुष्ठानहेतुजीवात्मतत्त्वज्ञानहेतुककर्मयोगसाध्या भक्तिरेव मोक्षसाधनमिति व्यवसायात्मिका बुद्धिरेव प्रामाणिकी, न तु साङ्ख्य-योग-पाशुपताद्वैतादिदर्शनानि। तदीयप्रक्रियाणा वेदे दर्शन त्वर्थवादतयैव नेयम्। यतस्तैः समाधौ भगवति मनःसमाधानाख्या व्यवसायात्मिका बुद्धिरेव न भवति, इति तादृशकर्मयोग एव कर्तव्यः। वेदास्तूक्तार्थबोधकाः संसाररूपविषनाशकाः। अतो वेदतात्पर्यबुद्ध्या भगवत्स्मरणपूर्वककर्मयोगानुष्ठानमेव युक्तम्। यतः कर्मयोगानुष्ठानेऽनन्तफलावाप्तिः, अन्यत्र तु स्वल्पफलावाप्तिः। स्वर्गकामादिविधीनां तु कर्मण्येव तात्पर्यम्, नतु कामनायाम्। अतो ज्ञानिनामपि ज्ञाने मोक्षे वाऽतिशयार्थं कर्मयोगानुष्ठानमावश्यकम्, इति ज्ञानोपाये योगे सिद्ध्यसिद्ध्योः समभावनया फलकामना परित्यज्य कर्म कुरु। स्वर्गादिसाधनकर्मापेक्षया ज्ञानोपायः कर्मयोगो गरीयानिति द्वैतमतम्। विशिष्टाद्वैतम्—कर्मयोगस्य फलैक्य नियमः, अन्यथा फलानेकत्वे तु बुद्धेरव्यवस्था भवति। अतः काम्यकर्मत्यागेन निष्कामकर्मानुष्ठेयम्, यतस्तस्यैव मोक्षोपायता। तेन हि शुद्धसात्त्विकावस्था भविता। यद्यपि वेदे समुद्रस्थाने बहूनि फलानि श्रूयन्ते, तत्साधनानि च, तथापि मोक्षः, तत्साधनं चैवादरणीयम्। अतो नित्य-नैमित्तिकयोरेव कर्मणोरनुष्ठान कर्तव्यम्, नतु फलेच्छाऽपि तत्र युक्ता। क्रियमाणे कर्मणि कर्तृत्वभावनाऽपि परित्यक्तव्या। अतो "न योत्स्ये" इति प्रतिज्ञा तवासङ्गता त्यागमेवार्हति, इति सिद्ध्यसिद्ध्योः समो भूत्वा कर्मयोग एवादरणीयः। तेन हि साक कर्मकरणमेव योग्यमिति बुद्धिरेव शरणीकर्तव्या, येन मोक्षोपायोऽनुष्ठितः स्यात्—इति। अद्वैतं तु—कर्मयोगे, ज्ञानयोगे वैकल्प व्यवस्थिता बुद्धिरेव युक्ता, नतु साङ्कर्यम्। यतो ज्ञानयोगेन साङ्ख्यानाम्, कर्मयोगेन योगिनामिति व्यवस्था हि शास्त्रसम्मता, इति वेदेषु कुत्रचन संसारफलानामप्युक्तावपि निष्कामतयाऽनुष्ठाने न संसारबन्धनम्। यतो "मन एव मनुष्याणा कारणं बन्ध-मोक्षयोः"। अतः सर्वेषा फलाना मूलभूत-मोक्षसाधने कर्मसंन्यासपूर्वकात्मज्ञाननिष्ठाया पर्यवसानार्थं कर्मयोग एव त्वया साम्प्रत कर्मसंन्यासानधिकारिणा कर्तव्यः, नतु कर्मसंन्यासः, फलकामनया कर्माचरणं वा। तदयं निष्कर्षः—द्वैतमते, विशिष्टाद्वैतमते च कर्मणां ज्ञाने मोक्षे चातिशयहेतुत्वम्, अद्वैतमते तु पूर्वोक्तप्रकारेण कर्म-ज्ञानयोगयोर्भिन्नाधिकारिकत्वमेव, निष्कामकर्मानुष्ठानमेव सर्वत्र कर्मयोग इति तु समानम्। "बुद्धौ शरणमन्विच्छे" त्यत्र तु उत्पन्नेऽपि ज्ञाने कर्मयोग आवश्यक इति द्वैतमतम्। कर्मयोगविषयिण्येव बुद्धिः शरणीकर्तव्येति विशिष्टाद्वैतम्, अद्वैत तु—आत्मदर्शन एव कर्मणां परिसमाप्तिः—इति। वक्ष्यते च—"सर्व कर्माखिलं पार्थ ज्ञाने परिसमाप्यते।" इति, इत्यात्मैक्यदर्शनमेव मुख्यं तत्त्वम्—इति॥

**"बुद्धियुक्तो जहातीह उभे सुकृत-दुष्कृते।**
**तस्माद् योगाय युज्यस्व योगः कर्मसु कौशलम्॥" (२-५०)**

अत्र हि बुद्धौ शरणमिति वाक्योपक्षिप्ताया बुद्धेः प्राप्तौ सुकृत दुष्कृतयोरश्लेष-विनाशौ, इति "तदधिगम उत्तरपूर्वाघयोरश्लेष-विनाशौ" इति सूत्रार्थो विवक्ष्यत इत्यद्वैतमतम्, तेन च पूर्वश्लोके बुद्धिशब्देन सर्वकर्मसंन्यास-

पूर्वकात्मज्ञाननिष्ठैव विवक्षितेति सिद्धमेव, द्वैतमते तत्र भगवदेकस्मरणमेव मन्यते, येन पुण्य-पापयोरश्लेष-विनाशौ तन्मतरीत्या, विशिष्टाद्वैतमते तु—कर्मयोगविषयिणी बुद्धिः परम्परया सुकृत-दुष्कृतयोरश्लेश-विनाशप्रयोजिकेति ॥

"कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्म-बन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ (२-५१)
यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।
तदा गन्ताऽसि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ (२-५२)
श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥" (२-५३)

इति श्लोकाः—फलकामनां विना भगवदर्पणबुद्ध्या कर्मानुष्ठानेन भगवदपरोक्षज्ञानं शास्त्रतात्पर्यविषयं ज्ञापयन्ति, मोक्षं च, इति फलत्यागफलं भगवदपरोक्षज्ञानम् । अतो यावदपरोक्षसाक्षात्कारं कर्मयोगोऽनुष्ठेयः । स चापरोक्षसाक्षात्कारोऽप्युत्कट एव—यः खलु भेरीताडनादिनाऽप्यप्रकम्प्यः स्यात्, विवक्ष्यते, इति बोधयन्तीति द्वैतमतम् । विशिष्टाद्वैतम्—जीवात्मयाथात्म्यज्ञानमेवात्र बुद्धिपदार्थं इति जीवात्मयाथात्म्यज्ञानपूर्वकं कर्मयोगेनानुष्ठीयमानेनेष्टसिद्धिः, इति कर्मयोगाङ्गतया प्रत्यगात्मयाथात्म्यज्ञानमपि विवक्ष्यते, ततः स्वल्पेषु फलेषु मोहः परित्यक्तव्यः, यावदात्मावलोकनं कर्मयोगः कर्तव्य एवेति बोधयन्तीति । अद्वैतमतं तु—बुद्धियोगोऽत्र समत्वज्ञानमेव कर्मयोगाङ्गतया मन्यते, नतु प्रत्यगात्मयाथात्म्यज्ञानम्, ब्रह्मापरोक्षसाक्षात्कारो वा । अत आत्मानात्मविवेकपर्यन्तमेव कर्मयोगाधिकारः । यावदन्तःकरणविक्षेपं कर्मयोगानुष्ठानमावश्यकमिति तु निष्कर्षः । अत्र मतत्रयेऽपि यावदात्मसाक्षात्कारं कर्मयोगो नियतः । इयान् विशेषः—यन्मतान्तरयोः यावत्सगुणपरमात्मसाक्षात्कारपर्यन्तमिति, अद्वैतमते तु निर्विशेषात्मस्वरूपसाक्षात्कारपर्यन्तमिति ॥

स्थितप्रज्ञलक्षणपराः श्लोकास्तु सर्वत्रैकरूपतया व्याख्यायन्ते । परदर्शनं परं तत्तन्मतानुसारि भिन्न-भिन्नम् । सर्वेषु तु मतेषु—"प्रजहाति यदा कामान्"इत्यादिनोच्यमानानीन्द्रियनिग्रहादीनि साधनावस्थायामेव साध्यानि, स्थितप्रज्ञावस्थायां तु श्वास-निःश्वासादिवदयत्नसाध्यानि, सिद्धानिवति समानमेव । स्थितप्रज्ञश्चायमनुत्कटपरमात्मसाक्षात्कारवानिति समानमेव, अनुत्कटत्वं चास्य प्रारब्धाधीनमिति त्वन्यदेतत् । उत्कटावस्थानिर्णयस्तु—"यस्मिन् स्थितो न दुःखेन गुरुणाऽपि नचाल्यते"इति षष्ठाध्यायोक्तावस्थावत्त्व एव, नान्यथेति तु विशेषः । सा चावस्थाऽसंप्रज्ञातसमाधेरपि साक्षात्कारत्वपक्षे स्थितप्रज्ञता, अन्यथा तु तत्साधनमित्याद्यन्यत्र विस्तृतम् ॥

तदेवमनेन द्वितीयेनाध्यायेन द्वैत-विशिष्टाद्वैताद्वैतप्रक्रिया जीवस्वरूपविषये, परमात्मस्वरूपविषये, जीवेश्वरयोः सम्बन्धविषये, मोक्ष-तत्साधनविषये च प्रायेण सर्वा एव सूत्ररूपेण संकलिता एव । तत्र द्वैत-

विशिष्टाद्वैतयोः परमात्मसाक्षात्कारः सगुणब्रह्मसाक्षात्कारः, अद्वैतमते तु निर्विशेषप्रत्यगात्मसाक्षात्कार एव। तत्र मतान्तरयोः कर्मयोगस्य सर्वदाऽनुष्ठानमावश्यकम्, अद्वैतमते तु स्थितप्रज्ञतापर्यन्तमेव। तत्र "दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय" इति ज्ञानयोगस्य कर्मयोगापेक्षयोत्कर्षो यः प्रतिपादितः, स बुद्धियोगशब्देनाद्वैताभित-ज्ञानयोगविवक्षायामेव स्वरसः। अत एव तृतीयाध्यायोपक्रमे—"ज्यायसी चेत् कर्मणस्ते मता बुद्धिर्जनार्दन। तत्किं कर्मणि घोरे मां नियोजयसि केशव॥" (३-१) इति प्रश्न उपपद्यते, इति कर्मज्ञानयोः समुच्चय-वादोऽयं न केवलमुक्तप्रश्नानुपपत्त्या, किन्तु स्थितप्रज्ञलक्षणाद्यनुसारेणापि ज्ञायते। अत्र—

"कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः।
जन्म-बन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम्॥" (२-५१)

इति जन्म-बन्धयोः कर्मजत्वम्, ज्ञानस्य तु कर्मफलबाधकत्वं च यदुक्तम्, तदप्यनुकूलम्। अतः कर्मयोगः, भक्ति-योगश्चोभावपि ज्ञानयोगसाधनमेवेत्यादि मधुसूदनसरस्वत्यादिप्रतिपादितरीत्यैव गीताया विवरणं भगवत्संमतमित्य-द्वैतिनः। इयमेव शैली सर्वत्र विमर्शनप्रसङ्गेनादरणीयेति स्थालीपुलाकन्यायमात्रमत्रानुसृतम्। अधिकं तु परस्तात्॥

**॥ ॐ शान्तिः शान्तिः शान्तिः॥**

*॥ इति महामहोपाध्यायानन्तकृष्णशास्त्रिकृतिषु दश गीताव्याख्यानि॥*

## ॥ शुद्धाशुद्धपत्रिका॥

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| ३ | १० | पाशुपतः | पाशुपत- | ३ | २४ | मृतेमिति | मृतमिति |
| ५ | २६ | समानयनार्यं | समानयनार्थं | ६ | ७ | कर्तृभेदं | कर्तृभेदो |
| ८ | २१ | दशम | सप्तम | ८ | २१ | कामोऽस्मि | भूतेषु |
| ,, | ,, | | | ,, | ,, | भूतेषु | कामोऽस्मि |
| १२ | ३ | निष्ठितं | विष्ठितं | १२ | ३ | प्रकृतिर्हेतु | हेतुः प्रकृति |
| १२ | ७ | विद्धित्वं | त्तद्विद्धि | १८ | २ | चतुर्दशा | चतुर्था |
| २४ | २४ | मामिकाम् | मे पराम् | २२ | ८ | विशष्टा | विशिष्टा |
| ३० | २ | पर्यवासनं | पर्यवसानं | ३३ | १५ | भगवद्गीता | भगवदुक्तिः |
| ३७ | १० | प्राप्स्यसे | प्राप्स्यसि | ३७ | १३ | फल | पर |
| ३८ | १५ | प्राप्स्यसे | प्राप्स्यसि | १९ | ३ | पश्यतः | सर्वशः |
| ५१ | ३६ | समत्ति | समाप्ति | १० | ५२ | मे | नो |
| ६४ | १४ | तषां | तेषां | ६८ | १५ | ७१ | १७ |
| ६८ | १५ | ७२ | १८ | ७२ | २४ | चतुविंशति | चतुर्विंशति |
| ७३ | २५ | मभावत्व | मभाव | ७५ | १७ | परमत्मन | परमात्मन |
| ७५ | १४ | मुक्ति, | मुक्तिः, | ७५ | २५ | तदेव | तदेवं |
| ८० | १८ | भवति | भवन्ति | | | | |

*Printed by* **K. V. APPA ROW**, *for and on behalf of* **The Metropolitan Printing & Publishing House, Ltd.**, *90, Lower Circular Road, Calcutta.*

